


Rs. 30/-




Rs. 40/-




Rs. 30/-




Rs. 30/-




Rs. 25/-




Rs. 30/-

**CHANDAMAMA BOOKS ARE ALREADY A LEGEND! THEY OPEN A NEW HORIZON ON THE WORLD OF LITERATURE FOR THE YOUNG**

Added to the six titles by **Manoj Das** is the charming seventh–

**WHEN THE TREES WALKED**

by the inimitable story-teller **Ruskin Bond**




Rs. 30/-

Among the titles in the process of production are:

**STORY OF KRISHNA**
**STORY OF RAMA**
**STORY OF BUDDHA**



For details, write to:

**CHANDAMAMA BOOKS**
Chandamama Buildings
Vadapalani, Madras - 600 026.

## प्रिमियर कैमरा



**35 mm काम्पाक्ट कैमरा**

- ✲ रंगीन एवं ब्लैक एण्ड व्हाइट फोटो देनेवाला
- ✲ फ्लैश-अटैचमेंट सिस्टम
- ✲ उपहार के लिए श्रेष्ठ
- ✲ खुद रोज़गारी के लिए उपयोगी आप अच्छी खासी मासिक कमाई कर सकते है

**कीमत रु. ४५० केवल**

**(मार्केट कीमत रु. ७५०/- है)**

**नापसंद आने पर कीमत वापस**

## ००७ टॉय रिवालवर



**बिलकुल नयी टेकनालजि में बनायी गयी ऑटोमैटिक टाय रिवालवर**

जानवरों, पक्षियों एवं चोरों से अपनी आत्म-रक्षा हेतु तथा नाटक, पिकनिक आदि के लिए ७ राउन्ड ऑटोमैटिक रिवॉल्वर।

**कीमत रु. २०० केवल**



**१०० बुलेट एवं स्पेशल बेल्ट-केश मुफ्त**

**लाइसेंस आवश्यक नहीं**

**पैकिंग खर्च, डाक खर्च अलग**

**दोनों सामान एक साथ मंगाने पर डाक खर्च मुफ्त, अपना पता अंग्रेजी में दे और उत्पाद का नाम उल्लेखित करें**

# VIVEK TRADERS (CV)

**P.O. MAIRA BARITH (GAYA)**

# अस्वस्थः आसम्

| | |
|---|---|
| गोपालः - रमेश! कदा ग्रामतः आगतवान् भवान् ? | Ramesh. When did you return from your village ? |
| रमेशः - ह्यः एव आगतवान् । | Just yesterday. |
| गो - विरामे भवान् कुत्र कुत्र गतवान् ? | Which are the places you went to during the holidays ? |
| र - कुत्रापि न गतवान् भोः । | I did not go anywhere. |
| गो - किमर्थम् ? अस्मिन् विरामे गृहसदस्यैः सह प्रवासगमनम् इति भवता उक्तम् आसीत् । | How is it ? You were saying you would go on a tour with your family. |
| र - परन्तु यस्मिन् दिने अहं ग्रामं गतवान्, तदनन्तरदिने एव तीव्रम् अस्वस्थः अभवम् । | But I fell ill the day after I reached my village. |
| गो - औषधं स्वीकृतं वा ? | Took midicines, didn't you ? |
| र - आम् ! औषधं स्वीकृतम् । सप्ताहाभ्यन्तरे अहं स्वस्थः अपि । | Yes, I did and got well within a week. |
| गो - अनन्तरं वा प्रवासार्थं गन्तुं शक्यम् आसीत् किल ! | You could have gone on the tour after recovery. |
| र - तीव्रम् अस्वास्थ्यम् आसीत् इत्यतः वैद्येन अहं सूचितः आसम् यत् - सप्ताहं यावत् विश्रान्तिः स्वीकरणीया इति । अतः अनन्तरसप्ताहे अपि केवलं शयनं कृतं मया । | As the health had suffered very badly, the Doctor advised me to take a week's rest after recovery and that is what I did. |
| गो - चिन्तां मा करोतु । आरोग्यं प्रधानं खलु ! प्रवासः पुनः कदाचित् कर्तुं शक्यः एव । | Don't bother. Health is very important. You can take the tour any time you like. |





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## स्त्रीशिक्षणं जन्मसिद्धाधिकारः



इदमिदानीम् अस्माभिः शिक्षकदिनं जागतिक-साक्षरता-दिनं च आचरितम् । उभयत्रापि अस्माकं नेतृभिः स्वस्य भाषणेषु शिक्षणस्य महत्त्वं प्रतिपादितम् । तेषु बहुभिः स्त्रीशिक्षणस्यापि उल्लेखः कृतः । ''स्त्रीणां कृते शिक्षणस्य महती आवश्यकता अस्ति । ताः शिक्षणात् वञ्चिताः न भवेयुः'' इति सर्वैरपि प्रतिपादितम् । 'शिक्षणम् इति एषः स्त्रीणां जन्मसिद्धः अधिकारः' इति तेषां मतम् ।

बहुभ्यः वर्षेभ्यः प्राक् महात्मगान्धिमहोदयेन यदुक्तम् आसीत्, तत् इदानीं स्मर्तुं योग्यम् अस्ति । सः उक्तवान् आसीत् - ''यदा वयम् एकं पुरुषं पाठयामः तदा एका व्यक्तिः सुशिक्षिता भवति । परन्तु यदा एकां स्त्रियं पाठयामः तदा एकः परिवारः, एकं राष्ट्रं वा सुशिक्षितं भवति । अस्माकं राष्ट्रं स्त्रीणाम् अधिकारविषये, तासाम् उन्नतिविषये च विशेषावधानं ददाति ।''

का समस्या तासाम् ? शतवर्षेभ्यः प्राक् काश्चन एव बालिकाः पाठशालां गच्छन्ति स्म । तासां कार्यक्षेत्रं गृहमात्रपरिमितं भवति स्म । पाककार्यं सीवनकार्यं चेति द्वयमेव ताभिः क्रियते स्म, येन अग्रे गत्वा ताः सुगृहिण्यः भूत्वा परिवारस्य परिपालनं कुर्वन्ति स्म ।

यद्यपि अनन्तरकाले विद्यालयानां, महाविद्यालयानां च द्वाराणि तासां कृते उद्घाटितानि, तथापि पितरः उच्चशिक्षणार्थं तासां प्रेषणे विशङ्कन्ते स्म । यदि कन्या उच्चशिक्षणयुक्ता तर्हि तस्याः अनुरूपं वरं प्राप्तुं महान् व्ययः करणीयः भवति इति पितरः चिन्तयन्ति स्म ।

परन्तु सौभाग्यवशात् सन्निवेशाः अधुना परिवर्तिताः इव दृश्यन्ते । स्त्रियः जीवनस्य सर्वेषु अपि क्षेत्रेषु पुरुषसहकारिभिः सह स्पर्धन्ते । तथापि इतोऽपि तादृशीनां स्त्रीणां महती संख्या अस्ति, याश्च दारिद्र्यरेखातः अपि अधः एव सन्ति । तासां दृष्ट्या शिक्षणम् इतोऽपि उपभोगविषयः । अतः ताः शिक्षणस्य विरोधं कुर्वत्यः दृश्यन्ते क्वचित् । जागरिता स्त्रीशक्तिः इदानीं स्वयं सर्वत्र दृष्टिं प्रसारयन्ती पश्यति यत् संविदानदत्ताः अधिकाराः मम के सन्ति इति ।


सम्पुटः - १३ नवम्बर् - १९९६ सञ्चिका - ८

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. - ७२.००




# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अटति | To roam | पञ्जिका | Torch |
| अपसारयतु | Push aside | परिखा | Trench |
| अवरोधः | To prohibit | पीठम् | A wooden seat |
| उत्पाट्य | Having uprooted | प्रकोष्ठः | Room |
| उत्सः | Fountain | भाटकगृहम् | A rented house |
| कर्मकरः | Worker | ललाटम् | Forehead |
| कलायः | Groundnut | वाचालः | Talkative |
| काचकम् | Glass | विकीर्णः | Scattered |
| कार्पासः | Cotton | विम्रष्टुम् | Discuss critically |
| कूपः | Well | वेणुः | Flute |
| क्रान्त्वा | Having crossed | व्यञ्जनम् | Curry |
| छिन्नम् | Torn | व्याकुलता | Worry |
| जवनिका | Curtain | शाकटिकः | Cartman |
| तर्जयित्वा | Having scolded | शाटिका | Saree |
| तूणीरः | Quiver | शाम्यति | Extinguish |
| दग्धः | Burnt | शिबिका | Palanquin |
| दावानलः | Wild fire | श्मश्रुधारी | Beareded person |
| दंष्ट्रा | Molar (Teeth) | सकृत् | Once |
| धूमवर्तिका | Cigarette | सुधाशिला | Lime |
| नुन्नवान् | Push aside (M) | स्नुषा | Doughter-in-law |

वार्ताविशेषः -

# द्वितीयवारम् अध्यक्षतां प्राप्तवान् एल्सिन्

बोरस्एल्सिन्वर्यः अगस्ट्मासस्य ९ दिनाङ्के द्वितीयवारं रशियादेशस्य अध्यक्षत्वेन शपथग्रहणं कृतवान् । मास्कोनगरस्थे क्रेम्लिन्काङ्ग्रेस्भवने ५००० अधिकजनानां समक्षं निराडम्बरतया प्रवृत्तः एषः कार्यक्रमः एल्सिन्वर्यस्य अनारोग्यस्य कारणतः पञ्चदशनिमेषाभ्यन्तरे समाप्तिं गतः । 'जुलैमासे द्वितीयवारं प्रवृत्ते अध्यक्षीयनिर्वाचने एल्सिन् जयशाली अभवत्' इति तत्र उद्घोषितम् । कार्यक्रमसमनन्तरम् एव चिकित्सार्थं चिकित्सालयं गतः एल्सिन् १५ दिनानि विश्रान्तिं प्राप्य अगस्ट्मासस्य ६ दिनाङ्के कार्यालयम् आगतवान् । ९ दिनाङ्के कार्यभारनिर्वहणम् आरब्धवान् च ।



जून् १६ दिनाङ्के प्रवृत्ते निर्वाचने एल्सिन्, तस्य प्रमुखप्रतिस्पर्धी कम्युनिस्ट्नायकः गेन्नडी जुगनोव् वा जयप्राप्त्यर्थं यावन्ति मतानि आवश्यकानि आसन् तावन्ति न प्राप्तवान् एव । डेमोक्रटिक्पक्षस्य नायकः व्लाडिमीर् जिरिनोव्स्कि, भूतपूर्वः सोवियत्युनियन्-अध्यक्षः मैकेल् गोर्बचेव् चापि एतस्मिन् निर्वाचने भागं गृहीतवन्तौ आस्ताम् ।

एल्सिन् भावितवान् आसीत् यत् प्रथमे चक्रे एव मया जयः प्राप्यते इति । किन्तु तदीयम् अनारोग्यं, चेचिन्याविद्रोहिणां निग्रहणार्थं प्रवृत्ते युद्धे पराजयः, तत्कारणतः देशे उत्पन्नः आर्थिकक्लेशः इत्यादीनां कारणतः सः विजयावकाशात् वञ्चितः अभवत् ।

जनवरीमासे प्रवृत्ते ड्यूमसभापतिनिर्वाचने कम्यूनिस्ट्पक्षस्य अभ्यर्थी जयं प्राप्तवान् । अतः - '१९९१ तमे वर्षे पतनं गतस्य कम्युनिस्टशासनस्य पुनः प्रतिष्ठापनं करणीयम्' इत्येतस्य विचारस्य प्रचारः आरब्धः । 'यदि अहम् अधिकारसूत्रं गृह्णीयां तर्हि विभक्तानि गणराज्यानि एकीकरिष्यामि' इति कम्यूनिस्ट्नायकः गेन्नडी जुगनोव् प्रतिज्ञातवान् आसीत् ।

'एल्सिन् जगनोव् वा यदि अधिकारपदं ग्रहीष्यति तर्हि प्रजाप्रभुत्वस्य अपायः सुनिश्चितः' इति प्रचारं कृतवान् आसीत् गोर्बचेव् ।'गोर्बचेवं पृथक्कृत्य अन्यैः त्रिभिः नायकैः अधिकारसूत्रं विभज्य निर्वोढव्यम्' इति डेमाक्रटिक्पक्षस्य नायकः जिरिनोव्स्कि प्रतिपादितवान् आसीत् । 'यदि एतादृशः सहकारः स्यात् तर्हि अध्यक्षीयनिर्वाचनम् एव न आवश्यकम्' इति तस्य अभिमतम् आसीत् ।

निर्वाचनात् पूर्वं प्रवृत्तात् सर्वेक्षणात् ज्ञातं यत् एल्सिन् ३५% मतानि प्राप्नुयात्, जुगनोव् च २४% मतानि प्राप्नुयात् इति । तदा एव राजकीयतज्ञाः ऊहितवन्तः आसन् यत् द्वितीयवारं निर्वाचनं व्यवस्थापनीयं भवेत् एव इति । द्वितीयवारं प्रवृत्ते निर्वाचने एल्सिन् विजयं प्राप्तवान् ।

एतत् निर्वाचनम् अधिकृत्य रशियादेशे काचित् विनोदमयी घटना जनैः उदाह्रियते इति श्रूयते । सा च एवम् अस्ति -

रक्षणाप्रमुखः एल्सिन्समीपं गत्वा उक्तवान् - "मया काचित् शुभवार्ता, काचित् अशुभवार्ता च आनीता अस्ति" इति ।

"अशुभवार्ताम् आदौ कथयतु" इति उक्तवान् एल्सिन् ।

"कम्युनिस्ट्-अभ्यर्थी ६८% मतानि प्राप्य जयं प्राप्नुयात् इति सम्भाव्यते" इति उक्तवान् रक्षणाप्रमुखः ।

"शुभवार्ता का ?" इति कुतूहलेन पृष्टवान् एल्सिन् ।

"भवता ७८% मतानि प्राप्स्यन्ते इति तु निश्चितम्" इति उक्तवान् रक्षणाप्रमुखः ।



# परमेशस्य प्रयाणम्

शृङ्गारपुरनामके ग्रामे कश्चित् पण्डितः आसीत् । तस्य एका पुत्री आसीत् । तस्याः विवाहार्थं पण्डितः प्रयतमानः आसीत् । अतः एकदा सः वरान्वेषणार्थं नगरं गन्तुम् इच्छन् शाकटिकाय वेङ्कटेशाय वार्तां प्रेषितवान् ।

तस्मात् ग्रामात् नगरगमनार्थं मार्गद्वयम् आसीत् । एकेन मार्गेण पादाभ्यां प्रातः गम्यते चेत् सायं नगरं प्राप्तुं शक्यते स्म । अपरेण मार्गेण शकटेन गन्तव्यम् आसीत् । तन्निमित्तं किञ्चित् व्ययः करणीयः आसीत् ।

वेङ्कटेशस्य अश्वशकटे पञ्च जनाः उपवेष्टुं शक्नुवन्ति स्म । यावत् चत्वारः जनाः न लभ्यन्ते तावत् वेङ्कटेशः शकटं न चालयति स्म । यदि एकः एव गन्तुम् इच्छति तर्हि तेन चतुर्णां जनानां मार्गव्ययः दातव्यः आसीत् ।

पण्डितस्य गमनसमये अन्ये त्रयः नगरं प्रति प्रस्थिताः आसन् । अतः पण्डितः मुहूर्तं कमपि अदृष्ट्वा प्रयाणार्थं सिद्धः जातः । सः कांस्यस्य पेटिकां जलकलशं च स्वीकृत्य यदा गृहात् बहिः आगतः तावता वेङ्कटेशस्य शकटः अपि तस्य गृहस्य पुरतः आगतः ।

शकटस्य अधोभागे बिलम् इव किञ्चित् स्थलम् आसीत् । पण्डितः कांस्यस्य पेटिकां तत्र स्थापयित्वा कलशं हस्तेन स्वीकृत्य शकटम् आरूढवान् । शकटः अग्रे गतः ।

शकटे अग्रे द्वौ उपविष्टवन्तौ आस्ताम् । तयोः सीतारामः पण्डितस्य परिचितः आसीत् । द्वितीयः रङ्गनाथः कस्यचित् कार्यस्य निमित्तं शृङ्गारपुरग्रामम् आगत्य पुनः नगरं गच्छन् आसीत् । पण्डितस्य पार्श्वे उपविष्टः परमेशः वृद्धः आसीत् । वाणिज्यसम्बद्धं कार्यं कर्तुं सः नगरं प्रति

प्रस्थितवान् आसीत् ।

परमेशस्य पार्श्वे एव अपरा एका कांस्य-पेटिका आसीत् । पण्डितः पादौ प्रसार्य यदा उपविष्टः तदा पेटिकायाः स्पर्शः जातः । तत् दृष्ट्वा परमेशः - "पेटिकायां देवमूर्तयः सन्ति । अतः पादस्पर्शं मा करोतु" इति उक्तवान् ।

परन्तु पादप्रसारेण विना तत्र उपवेशनं कष्टकरम् आसीत् । अग्रे उपविष्टवन्तौ पादौ प्रसारितवन्तौ आस्ताम् । परमेशः अपि पादौ प्रसार्य उपविष्टवान् आसीत् ।

पादौ पुटीकृत्य दीर्घकालम् उपवेष्टुम् असमर्थः पण्डितः किञ्चित्समयानन्तरं परमेशम् उक्तवान् - "स्वामिन् ! भवतः पेटिकां किञ्चित् पार्श्वे स्थापयतु । एवम् उपवेशनं मम कष्टाय भवति । अहं पादौ प्रसार्य उपविशामि" इति ।

तदा परमेशः पण्डितस्य समीपं पेटिकां नुन्नवान् । अनन्तरं पण्डितः हस्तौ पेटिकायाः उपरि स्थापयित्वा पादौ प्रसार्य सम्यक् उपविष्टवान् । तत् दृष्ट्वा परमेशः - "पेटिकातः हस्तौ निष्कासयतु" इति पण्डितम् उक्तवान् ।

पण्डितः कोपेन - "एतौ पादौ न, हस्तौ" इति उक्तवान् ।

"पेटिकायां विद्यमानानि वस्तूनि काचकस्य सन्ति । भवान् पेटिकायाः उपरि भारं स्थापयति चेत् वस्तूनि भग्नानि भविष्यन्ति" इति उक्तवान् परमेशः ।

"स्वामिन् ! एषा पेटिका कांस्यस्य खलु ! अतः एतस्य अन्तः स्थितानि वस्तूनि भग्नानि सुलभतया न भविष्यन्ति" इति पण्डितः विनयेन उक्तवान् ।

एतत् वचनम् अनङ्गीकुर्वन् परमेशः - "कांस्यावरणं न तथा दृढम् अस्ति । अन्यच्च काचकवस्तूनि पेटिकायाः



SK-F2



उपरिभागे एव सन्ति । सहप्रयाणिकेभ्यः कष्टदानम् उचितं न । कृपया भवतः हस्तौ अपसारयतु'' इति उक्तवान् ।

तस्य तादृशं वचनं श्रुत्वा किं वक्तव्यम् इति पण्डितेन न ज्ञातम् । सः क्षणं यावत् विचिन्त्य - ''तर्हि भवता पेटिका शकटस्य अधोभागे स्थापनीया आसीत् । भवान् किमर्थं तत्र न स्थापितवान् ? अत्र मम तु उपवेष्टुं कष्टं भवति'' इति उक्तवान् ।

''पेटिकायां काचकस्य देवमूर्तयः सन्ति । अतः एव पेटिकां मत्समीपे स्थापितवान् । वयं चत्वारः एव स्मः । एकं स्थलं तु रिक्तम् अस्ति । तत्र अहं पेटिकां स्थापितवान् । यदि तस्मिन् स्थाने अपरः स्यात् तर्हि भवान् पादेन तस्य स्पर्शं कुर्यात् वा ? तस्य भुजस्य उपरि हस्तं स्थापयेत् वा ? न खलु ? अत्र उपवेशने वस्तुतः भवतः कष्टं किमपि नास्ति'' इति उक्तवान् परमेशः ।

एतस्य वचनस्य उत्तरं दातुम् अशक्तः पण्डितः मौनम् उपविष्टवान् । कदाचित् एतस्मै सम्यक् उत्तरं दातव्यम् इति चिन्तितवान् च ।

किञ्चित्समयानन्तरं परमेशः हस्ते धूमवर्तिकां स्वीकृत्य अग्निपेटिकानिमित्तं सीतारामं पृष्टवान् । परन्तु सीतारामः 'नास्ति' इति उक्तवान् । अपरयोः उभयोः समीपे अपि अग्निपेटिका न आसीत् ।

अनन्तरं पण्डितस्य पिपासा अभवत् । अतः सः पार्श्वे स्थितेन कलशेन जलं पातुम् उद्युक्तः जातः ।

तदा परमेशः - ''स्वामिन् ! चलति शकटे उपविश्य जलं न पातव्यम् । यतः वायुना जलबिन्दवः इतस्ततः विकीर्णाः सन्तः अस्माकम् उपरि पतन्ति । तत् तु उच्छिष्टं जलं भवति । तत् वयं न सहामहे । अतः तेन कलशेन जलं मा पिबतु'' इति उक्तवान् ।

''मम अतीव पिपासा अस्ति । मया जलं पातव्यम् एव । अतः शकटं स्थगयतु'' इति उक्तवान् पण्डितः ।

तदा परमेशः - ''मया शीघ्रं गन्तव्यम् । भवतः विषये अहं न चिन्तयामि । लघुलघु-कारणैः शकटं स्थगयितुं न शक्यते । प्रयाणस्य अपि विलम्बः भविष्यति । अतः भवान् पिपासानिग्रहणं करोतु'' इति उक्तवान् ।

एतस्मात् कुपितः पण्डितः जलं न

पीतवान् । शकटः किञ्चिद्दूरं गतः आसीत् । तदा कश्चित् धूमपानं कुर्वन् आगच्छन् आसीत् । तं दृष्ट्वा पण्डितः परमेशं पृष्टवान् - ''स्वामिन् ! कोऽपि धूमपानं कुर्वन् आगच्छन् अस्ति । शकटं स्थगयतु इति वदामि वा ?'' इति ।

तदा परमेशः सन्तोषेण शाकटिकम् उक्तवान् - ''शकटं स्थगयतु'' इति ।

अनन्तरं पण्डितः कलशं स्वीकृत्य शकटात् अवतीर्य - ''सः मम परिचितः इव दृश्यते । परन्तु पिपासया किमपि वक्तुं न शक्नोमि । जलं पिबामि वा ?'' इति परमेशं पृष्टवान् ।

''शकटे चेत् जलपानार्थं मम आक्षेपः आसीत् । परन्तु मार्गे चेत् मम कोऽपि आक्षेपः नास्ति'' इति उक्तवान् परमेशः । पण्डितः जलं पीत्वा तस्य जनस्य समीपम् आगतवान् । यदा तेन सह पण्डितः सम्भाषणं कर्तुम् उद्युक्तः तावता सः जनः एव - ''अये, भवान् वा ! दूरात् परिचयः न प्राप्तः । क्षम्यताम्'' इति वदन् धूमवर्तिकां दूरे क्षिप्तवान् ।

''भवान् कीदृशं कार्यं कृतवान् भोः ! धूमवर्तिकानिमित्तम् एव भवन्तम् आहूतवान् आसम् अहम्'' इति वदन् पण्डितः परमेशस्य आवश्यकतां तं जनं निवेदितवान् ।

''एवं वा ? सा प्रसिद्धा धूमवर्तिका अस्ति । तत्रत्यः अग्निः शीघ्रं न शाम्यति । धूमवर्तिका पार्श्वे एव पतिता अस्ति । दास्यामि वा ?'' इति पण्डितं पृष्टवान् सः जनः ।

तदा पण्डितः - ''भूमौ पतितां धूमवर्तिकां दास्यति वा ? भवतः बुद्धिः अस्ति वा ?'' इति उक्तवान् ।

''स्वामिन् ! ये धूमपानं कुर्वन्ति तेषां





उपविष्टवान् आसीत् । सः मार्गे सर्वत्र अग्निनिमित्तम् अन्वेषणं कुर्वन् आसीत् ।

किञ्चित् अग्रे गमनानन्तरं कश्चित् घटेन अग्निं नयन् तेन दृष्टः । परन्तु सः होमाग्निः आसीत् । अतः तेन अग्निना धूमवर्तिका न ज्वालनीया आसीत् । अग्रे कश्चित् स्थालिकया अग्निं नयन् आसीत् । परन्तु तेन अग्निना मांसं पक्ववन्तः आसन् । सः अग्निः अपि पण्डितेन न स्वीकृतः ।

मार्गे कमपि शिलाखण्डं पश्यति चेत् तेन अग्निं ज्वालयितुं शक्यते वा इति प्रयत्नं करोति स्म पण्डितः । अनन्तरं पण्डितः पुनः इतोऽपि अधिकं जलं पीत्वा - ''मम तु पिपासानिवारणं जातम् । परन्तु भवतः अग्निप्राप्तिभाग्यं न स्यात्'' इति परमेशम् उक्तवान् ।

बुद्धिः सम्यक् न भवति एव । तादृशः अनुभवः ममापि अस्ति । अग्निः अवकरे अस्ति चेदपि अग्निः एव खलु'' इति उक्तवान् सः जनः ।

''भवतः वचनं पर्याप्तम् । परमेशः तादृशः जनः न । सः पवित्रतारक्षणार्थम् अधिकं प्रयत्नं करोति । अतः भवान् गच्छतु'' इति उक्त्वा तं प्रेषयित्वा शकटम् आरूढवान् पण्डितः ।

किञ्चित्समयानन्तरं पण्डितः परमेशं पश्यन् - ''भवतः इच्छा तु न पूरिता । परन्तु मम पिपासानिवारणं जातम्'' इति उक्तवान् ।

एतस्मात् परमेशस्य कोपः आगतः चेदपि तस्य निग्रहणं कृत्वा सः मौनम् उपविष्टवान् । परन्तु पण्डितः तु मौनं न

एवं मार्गे सर्वत्र अग्निप्राप्तिनिमित्तं पण्डितेन क्रियमाणं प्रयत्नं दृष्ट्वा शाकटिकः वेङ्कटेशः, उभौ प्रयाणिकौ च आश्चर्यम् अनुभवतः स्म । परमेशः पण्डितं पीडितवान् चेदपि तस्य निमित्तम् एव किमर्थं पण्डितः श्रमं स्वीकरोति इति ते आश्चर्यम् अनुभवन्ति स्म ।

परमेशः तु चिन्तितवान् यत् पण्डितः जलपानार्थम् एव एतादृशं नाटकं कुर्वन् अस्ति इति ।

अन्ते पण्डितः कस्माच्चित् प्रयाणिकात् अग्निपेटिकां प्राप्तवान् । सः प्रयाणिकः पण्डितम् उक्तवान् - ''स्वामिन् ! मम समीपे अपरा अग्निपेटिका अस्ति । एताम् अग्निपेटिकां भवान् एव स्थापयतु । प्रयाणे कदाचित् एतस्याः आवश्यकता भवेत्''

इति ।

पण्डितः अग्निपेटिकां स्वीकृत्य शकटम् आरूढवान् । अग्निपेटिकां परमेशाय दत्तवान् च । तदा परमेशस्य उत्साहः वर्णनातीतः आसीत् । सः उत्साहेन धूमवर्तिकां मुखे स्थापयित्वा, अग्निशलाकां निष्कासयन् आसीत् । तदा पण्डितः– "स्वामिन् ! भवान् धूमवर्तिकां ज्वालयन् अस्ति इति मम भाति । धूमवर्तिकायाः धूमः मह्यं न रोचते" इति परमेशम् उक्तवान् ।

"तर्हि क्षणं यावत् शकटं स्थगयतु । धूमपानार्थं मम प्रबला इच्छा अस्ति" इति उक्तवान् परमेशः ।

"भवतः विषये अहं न चिन्तयामि । मया शीघ्रं गन्तव्यम् अस्ति । लघुलघुकारणैः शकटस्थगनम् उचितं न भवति" इति उक्तवान् पण्डितः ।

तदा परमेशः-कोपेन - "पिपासासमये जलपानार्थं यानं स्थगितवान् भवान् इदानीं किमर्थं यानं न स्थगयति ?" इति पृष्टवान् ।

"सहप्रयाणिकेभ्यः कष्टं न दातव्यम् इति भवता एव उक्तम् अस्ति । भवता यथा चिन्तितं तथा नास्ति वस्तुस्थितिः । अहं जलपानार्थं कदापि शकटं न स्थगितवान् । भवतः अग्नेः आवश्यकतानिमित्तं भवतः अनुमतिं पृष्ट्वा एव अहं शकटं स्थगितवान् । परन्तु भवान् इदानीं धूमपाननिमित्तं शकटं स्थगयन् अस्ति" इति उक्तवान् पण्डितः ।

तदा परमेशः - "धूमवर्तिकागन्धम् अनिच्छन् भवान् किमर्थं कष्टेन अग्निपेटिकां सम्पादितवान् ? धूमपानाय या उपयोक्तुं न शक्या तस्याः प्राप्तितः किं वा प्रयोजनम् ?" इति कोपेन पृष्टवान् ।

"मम अनुपस्थितौ धूमपानं कर्तुम् अग्निपेटिकायाः उपयोगः भविष्यति । पण्डितस्य तु स्पर्धागुणः भवेत् एव । भवान् बहुषु विषयेषु माम् अधिक्षिप्तवान् आसीत् । अतः एकस्मिन् विषये वा भवतः अधिक्षेपं कर्तुम् अवकाशः प्राप्तव्यः इति उद्देशेन अहं प्रयत्नपूर्वकम् अग्निपेटिकां सम्पादितवान्" इति उक्तवान् पण्डितः ।

एतत् वचनं श्रुत्वा शकटे स्थिताः त्रयः अपि हसितवन्तः । परमेशः लज्जया शिरः अवनमितवान् ।



# युक्तियुक्तं वचनम्

वसन्तपुरनामके ग्रामे उपेन्द्रनामकः भूस्वामी आसीत् । कृषिकेभ्यः करसङ्ग्रहणार्थं, तेषां योगक्षेमं द्रष्टुं च कस्यचित् चतुरस्य उद्योगिनः आवश्यकता उपेन्द्रस्य आसीत् । भूस्वामिसहायकः एतस्याः वार्तायाः उद्घोषणं कारितवान् । एतत् श्रुत्वा उद्योगम् अपेक्षमाणाः केचन युवकाः भूस्वामिगृहम् आगतवन्तः ।

भूस्वामिनः पार्श्वे स्थितः सहायकः एकैकम् अपि आहूय - ''भवान् विशाले गभीरे च कूपे पतति इति चिन्तयतु । तदा कथं तस्मात् बहिः आगच्छति ?'' इति पृच्छति स्म ।

एकैकः अपि - ''साहाय्यार्थम् आक्रोशनं करोमि । तदा रक्षणार्थं कोऽपि आगच्छति एव'' इति उक्तवान् ।

अन्ते कश्चित् युवकः भूस्वामिसहायकं पृष्टवान् - ''स्वामिन् ! अहं यस्मिन् कूपे पतिष्यामि तत्र निश्रेणिः भविष्यति वा ?'' इति ।

''तत्र यदि निश्रेणिः स्यात् तर्हि अहं किमर्थम् एतं प्रश्नं पृच्छेयम् ?'' इति पृष्टवान् भूस्वामिसहायकः ।

''तादृशी परिस्थितिः दिने भविष्यति उत रात्रौ'' इति पुनः युवकः पृष्टवान् ।

''दिन-रात्रिभेदस्य प्रस्तावः अत्र न प्रस्तुतः । तस्मात् कूपात् भवान् कथं बहिः आगमिष्यति इत्येव प्रश्नः'' इति भूस्वामिसहायकः किञ्चित् कोपेन उक्तवान् ।

तदा युवकः - ''अहम् अन्धः तु न । स च कालः रात्रिः अपि यदि न भवति तर्हि अहं कथं वा कूपे पतेयम् ?'' इति पृष्टवान् ।

तस्य उत्तरं श्रुत्वा भूस्वामिसहायकः आश्चर्यचकितः जातः । तदा भूस्वामी मन्दहासेन - ''एतम् एव उद्योगे नियोजयतु'' इति स्वसहायकम् उक्तवान् ।






# १५

[धीरमतिः स्वगृहम् आगत्य प्रवृत्तं सर्वं मातरम् उक्तवान् । परन्तु स्वपितुः विषयं सः न उक्तवान् । तेन सह पैलासतः आगतः कश्चित् ज्ञानी तस्य अतिथिः आसीत् । तस्य अतिथेः भोजनानन्तरं धीरमतेः गृहे स्थिताः सर्वे दुष्टाः विशाले प्रकोष्ठे भोजनार्थम् उपविष्टवन्तः । तदा वृद्धवेषधारी रूपधरः तत्र आगत्य धीरमतिना दत्तम् आहारं खादित्वा अन्यान् सर्वान् आहारं याचितवान् । तदनन्तरम् ....]

तं वृद्धं दृष्ट्वा रूपधरस्य गृहे स्थितानां दुष्टानां मनसि करुणा उत्पन्ना । ते स्वहस्ते यत् अस्ति तत् वृद्धाय दत्तवन्तः । केचन आश्चर्येण पृष्टवन्तः यत् एषः कः ? कुतः आगतः ? इति ।

तदा तत्रैव स्थितः अजपालकः - "स्वामिनः ! एतं वृद्धं पूर्वं मार्गे एव अहम् दृष्टवान् । अस्माकं वराहपालकः आत्मना सह एतम् आनयन् आसीत्" इति उक्तवान् ।

एतस्य वचनं श्रुत्वा दुर्बुद्धिः वराहपालकं पृष्टवान् - "भवान् कीदृशः मूर्खः अस्ति ? अस्मिन् नगरे भिक्षुकाणां संख्या न्यूना इति चिन्तयित्वा एतम् आनीतवान् वा भवान् ? किं भवान् स्वामिनः सम्पत्तिं न्यूनीकर्तुम् इच्छति ?" इति ।

"स्वामिन् ! भवान् ज्येष्ठः । परन्तु अस्मादृशानां विषये भवान् कठोरतया व्यवहरति । कोऽपि भिक्षुकं बुद्ध्या न आनयति । मम व्यवहारं विमृष्टुं भवान्



कः ? मम स्वामिनी, तस्याः पुत्रः च यावत् मां पालयतः तावत् मद्विषये भवता करणीयं किमपि नास्ति । मया भवतः अभिप्रायः पुरस्करणीयः अपि नास्ति'' इति उक्तवान् वराहपालकः ।

तदा धीरमतिः वराहपालकं - ''किमर्थम् एवं कोपः भवतः ? दुर्बुद्धेः वचनं सर्वदा एवम् एव भवति । ये अधिककथकाः भवन्ति ते किमपि कर्तुं न शक्नुवन्ति इति न श्रुतं वा भवता ? किमपि कर्तुं न शक्नोति सः । अतः तस्य वचनं श्रुत्वा अपि मौनं स्थितिः एव वरम् । यदि वयं किमपि वदामः तर्हि सः इतोऽपि अधिकं रटति । अन्यच्च तं दृष्ट्वा अन्ये अपि वक्तुम् आरभन्ते'' इति उक्त्वा दुर्बुद्धिं पश्यन् - ''शक्तिमदस्य कारणतः भवान् वृद्धं बहिः प्रेषयितुम् इच्छति। एवं कदापि न करणीयम् एव । यदि सामर्थ्यम् अस्ति तर्हि किञ्चित् दातव्यम् । किन्तु कदापि कठोरतया न व्यवहरणीयम् । सर्वदा भवतः आसक्तिः तु खादने एव भवति, न तु दाने'' इति उक्तवान् ।

''अहो ! भवान् उपदेशं करोति वा ? मया एतस्मै वृद्धाय यावत् दीयते तावत् सर्वैः दीयते चेत् एषः वृद्धः पुनः अत्र न आगमिष्यति । अतः इदानीम् एतस्य दण्डनम् एव वरम्'' इति वदन् दुर्बुद्धिः स्वपादयोः अधः विद्यमानं पीठं हस्तेन गृहीतवान् ।

तावति काले रूपधरः सर्वेषां हस्तात् यत्किञ्चित् स्वीकृत्य दुर्बुद्धेः समीपम् आगत्य - ''स्वामिन् ! एतेषां सर्वेषाम् अपेक्षया भवान् एव ज्येष्ठः इति भाति । अतः भवता मह्यम् अधिकम् एव दातव्यम् । पूर्वं कदाचित् भवतः इव मम अपि जीवनं वैभवयुक्तम् एव आसीत् । मम सहस्रशः सेवकाः आसन् । परन्तु दौर्भाग्यवशात् देवाः मां दुष्कृत्येषु प्रवर्तितवन्तः । अतः मम एषा गतिः । मम सेवकाः ईजिप्ट्देशे शत्रुभिः हताः । अनन्यगतिकः अहम् एकाकी सन् एवं देशसञ्चारं कुर्वन् अस्मि'' इति उक्तवान् ।

''एषः मां किमर्थम् एवं पीडयति ? सुखेन भोजनं कर्तुम् अपि अवकाशं न ददाति एषः । अये, भिक्षुकस्य भवतः कियान् अहङ्कारः ! भवान् दूरे एव तिष्ठतु । अन्यथा भवन्तं पुनः ईजिप्ट्देशं प्रेषयेयम् । अत्रत्या सम्पत्तिः अन्यस्य इति कारणतः ते

सर्वे स्वेच्छया व्यवहरन्तः भवते अधिकम् एव यच्छन्ति'' इति उक्तवान् दुर्बुद्धिः ।

''स्वामिन् ! भवान् ज्येष्ठः चेदपि बुद्धिविहीनः इव व्यवहरति । अत्र स्थितायाः अन्यसम्पत्तितः एव भवान् किमपि दातुं न इच्छति । एवं स्थिते, अत्रत्या सम्पत्तिः भवदीया एव यदि स्यात् तर्हि किं भवान् अदास्यत् ? अत्र खादनार्थं बहुविधम् अस्ति । रोटिकाखण्डं वा ददातु कृपया'' इति उक्तवान् रूपधरः ।

''अहो ! भवान् कीदृशानि वचनानि वदति !'' इति वदन् दुर्बुद्धिः स्वहस्ते स्थितं पीठं रूपधरस्य दक्षिणभुजस्य उपरि क्षिप्तवान् । तस्मात् ताडनात् रूपधरः भीतः न अभवत् । सः दुर्बुद्धिं तीक्ष्णदृष्ट्या कोपेन च दृष्ट्वा द्वारसमीपस्थं स्वस्थानं गत्वा- ''अयि भोः, एतस्य गृहस्य स्वामिनीं परिणेतुं सिद्धाः महाराजाः ! मम वचनं शृण्वन्तु भवन्तः । स्वसम्पत्तेः रक्षणार्थं कदाचित् अन्यः पीडनीयः भवति । तत् सह्यं भवति कदाचित् । परन्तु उदरनिमित्तं भिक्षाटनं कुर्वतः पीडनं तु सर्वथा उचितं न । अस्माकं रक्षकः भगवान् यदि स्यात् तर्हि एषः दुर्बुद्धिः श्मशानं प्रति गच्छेत्'' इति वेदनामिश्रितेन स्वरेण उक्तवान् ।

''मौनम् उपविश्य खादतु भवान् । नो चेत् भवन्तं बहिः प्रेषयिष्यामि । जागरूकतया व्यवहरतु अत्र'' इति दुर्बुद्धिः कोपेन उक्तवान् ।

वृद्धस्य विषये कठोरतया व्यवहरतः दुर्बुद्धेः व्यवहारं तत्र स्थिताः सर्वे न इष्टवन्तः ।



''भवान् किमर्थम् एतं वृद्धं ताडयति ? कदाचित् देवः एव वृद्धरूपेण आगतः स्यात् । कदा किं भवति इति कः जानाति ?'' इति सर्वे दुर्बुद्धिम् उक्तवन्तः ।

तेषाम् एकम् अपि वचनं दुर्बुद्धिः न श्रुतवान् । स्वपितुः अवस्थां दृष्टवतः धीरमतेः कोपः आगतः । सः स्वदुःखं, कोपं च कष्टेन निगृहीतवान् । तत्र प्रवृत्तं वृत्तान्तं पद्ममुखी, तस्याः सेविकाः च ज्ञातवत्यः । पद्ममुखी वराहपालकम् आहूय - ''एकवारं भिक्षुकं मम समीपम् आनयति वा भवान् ? सः बहूनां देशानां भ्रमणं कृत्वा आगतवान् इति श्रुतम् । सः मम पत्युः विषयं जानीयात् कदाचित्'' इति उक्तवती ।

वराहपालकः रूपधरस्य समीपं गत्वा -

''स्वामिनी भवन्तं द्रष्टुम् इच्छति । स्वपतेः विषयं भवत्तः ज्ञातुम् इच्छति'' इति उक्तवान् ।

''तत् वक्तुम् इदानीम् उचितः समयः न । मध्याह्नानन्तरं कोऽपि यदा न भवति तदा आगमिष्यामि इति तां वदतु'' इति वराहपालकम् उक्तवान् रूपधरः ।

वराहपालकः एतं विषयं पद्ममुखीम् उक्त्वा धीरमतिम् उक्तवान् - ''स्वामिन् ! इतः परं गत्वा अहं वराहरक्षणं करिष्यामि । एतं वृद्धं जागरूकतया पश्यतु । दुर्बुद्धिः एतं कथं निर्दयं ताडितवान् इति तु भवान् दृष्टवान् एव'' इति ।

''वृद्धस्य विषये भवान् चिन्तां मा करोतु । भवता अवश्यं भोजनं कृत्वा गन्तव्यम्'' इति वराहपालकम् उक्तवान् धीरमतिः ।

भोजनं कृत्वा वराहपालकस्य गमनसमये मध्याह्नः आसीत् । सर्वेऽपि गायन्तः नृत्यं कुर्वन्तः च सन्तोषेण कालं यापयन्तः आसन् । तदा तत्र अपरः भिक्षुकः आगतः । सः सर्वदा नगरे अटन् भिन्नभिन्न-विषयान् सङ्गृह्णन् सर्वान् वदति स्म । अतः सर्वे तं 'गुप्तचरः' इति आह्वयन्ति स्म । सः भिक्षुकः अन्तः आगमनानुक्षणम् एव रूपधरं दृष्ट्वा - ''भोः ! भवान् कः ? भवान् स्वयं बहिः निर्गच्छति, उत अहं भवन्तम् इतः प्रेषयामि ?'' इति पृष्टवान् ।

''अहं भवन्तं किम् अपि न उक्तवान्, न वा पीडितवान् । अतः स्वस्य कार्यं भवान् करोतु । भवान् मां पीडयति चेत् अहम् अपि भवन्तं पीडयितुं जानामि'' इति गाम्भीर्येण उक्तवान् रूपधरः ।

''भवतः अहङ्कारः अधिकः अस्ति । कः बलशाली इति द्रक्ष्यामि । अहं युवकः अस्मि । भवान् मां किमपि कर्तुं शक्नुयात्



वा ?'' इति उक्तवान् भिक्षुकः ।

ततः उभौ अपि शुनकौ इव कलहम् आरब्धवन्तौ । एतद् दृष्ट्वा दुर्बुद्धेः परमानन्दः जातः । सः अन्यान् उक्तवान् - ''एतयोर्मध्ये कः जयं प्राप्नोति इति द्रक्ष्यामः । एतयोः कलहः अस्माकं विनोदाय भवति'' इति । सर्वे उत्थाय भिक्षुकौ परितः स्थितवन्तः ।

''भवतोः यस्य जयः भवति सः रात्रिपर्यन्तं यथेष्टं खादितुं शक्नोति । यः पराजितः भवति सः इतः गच्छेत्'' इति उक्तवान् दुर्बुद्धिः ।

''स्वामिन् ! अहं तु वृद्धः अस्मि । मया युवकेन सह युद्धं करणीयम् अस्ति । भवन्तः मम वञ्चनं न कुर्वन्ति इति वचनं यच्छन्तु । एतस्य भिक्षुकस्य साहाय्यम् भवन्तः न कुर्वन्ति चेत् अहम् अधिकशक्त्या युद्धं करोमि'' इति उक्तवान् रूपधरः ।

सर्वे तथा एव प्रतिज्ञां कृतवन्तः । अनन्तरं धीरमतिः रूपधरम् उक्तवान् - ''एतस्य गृहस्य स्वामी अहम् अस्मि । भवतः अन्याय्यं यथा न भवेत् तथा अहं करोमि'' इति ।

अनन्तरं रूपधरः छिन्नानि स्ववस्त्राणि निष्कासितवान् । तस्य शक्तियुतं शरीरं दृष्ट्वा सर्वे स्तम्भीभूताः । 'एषः अपरं भिक्षुकं निश्चयेन यमसदनं प्रेषयिष्यति' इति सर्वे चिन्तितवन्तः । भिक्षुकस्य परिस्थितिः अपि तथा एव आसीत् । सः भयेन कम्पमानः आसीत् । अन्यकर्मकराणां साहाय्येन तस्य वस्त्राणि निष्कासितानि । रूपधरेण सह युद्धं कर्तुं महता अनुरोधेन सः भिक्षुकः प्रेषणीयः अभवत् ।

'एकेन ताडनेन एव एषः भिक्षुकः यमसदनं प्रेषणीयः, उत लघुना ताडनेन अधः पातनीयः' इति रूपधरः क्षणकालं





चिन्तितवान् । 'एकेन एव ताडनेन भिक्षुकं मारयिष्यामि चेत् मद्विषये एतेषां दुष्टानां संशयः आगच्छेत् । अतः एकं लघुताडनं दत्त्वा अधः पातयिष्यामि' इति निर्णीतवान् सः ।

सः भिक्षुकः रूपधरं भुजे ताडयितुं यदा उद्युक्तः तदा रूपधरः भिक्षुकं तस्य मुखे ताडितवान् । तदा तस्य मुखात् रक्तं पतितम् । सः आक्रोशनं कुर्वन् अधः पतितवान् । तदा द्रष्टारः सर्वे करताडनं कुर्वन्तः उच्चैः हसितवन्तः ।

रूपधरः भिक्षुकस्य पादं गृहीत्वा तम् आकृषन् बहिः नीतवान् । तत्र तं भित्तिपार्श्वे उपवेश्य तस्य दण्डं तस्मै दत्त्वा - ''शुनकाः वराहाः वा अन्तः यथा न आगच्छेयुः तथा भवान् पश्यन् भवतु । 'अहम् एव भिक्षुकाणां चक्रवर्ती' इति मा चिन्तयतु । भगवतः अनुग्रहेण अद्य भवान् रक्षितः'' इति उक्तवान् ।

अनन्तरं स्वस्थानम् आगत्य तत्रैव उपविष्टवान् रूपधरः । सायं पद्ममुखी अधः आगतवती । तस्याः सौन्दर्यं दृष्ट्वा सर्वे आश्चर्यचकिताः । सा स्वपुत्रम् उक्तवती - ''धीरमते ! एतेषु दिनेषु भवान् किमर्थम् एवं व्यवहरति ? अस्माकम् आश्रये स्थितानाम् अपरिचितानाम् अपायः भवति चेत् अस्माकम् अपकीर्तिः भवेत् खलु !'' इति ।

''अम्ब ! मम एतादृशं व्यवहारं दृष्टवत्याः भवत्याः कोपः सहजः । किन्तु किं करवाणि, एते दुष्टाः सर्वे मां परितः सन्ति इति कारणतः अहं किमपि कर्तुं न शक्नोमि । किन्तु अद्य यत् प्रवृत्तं तत् युक्तम् एव । तस्य भिक्षुकस्य योग्यं दण्डनं जातम्'' इति मातरम् उक्तवान् धीरमतिः ।

दूरतः विपुलयोधनामकः कश्चित् पद्ममुखीम् उक्तवान् - ''पद्ममुखि ! भवत्याः सौन्दर्यं यदि देशे स्थिताः सर्वे द्रक्ष्यन्ति तर्हि सर्वदा अत्रैव भवत्याः गृहसमीपे एव अटेयुः । सर्वे भवतीं परिणेतुम् इच्छेयुः च'' इति ।

''मम पत्युः गमनसमनन्तरम् एव मम सौन्दर्यम् अपि नष्टं जातम् अस्ति । पत्याः पतिः एव परदैवं भवति । पत्युः उपस्थितौ मम जीवनस्य अपि अर्थः आसीत् । तस्य कारणतः मया सुखसन्तोषादयः लभ्यन्ते स्म । तस्य उदारगुणाः वर्णनातीताः । गमनसमये 'मम मरणानन्तरम् अन्यं

वृणोतु' इति तेन उक्तम् इति तु सत्यम् एव । परन्तु मम स्वयंवरः एवम् अवमानकररीत्या भवेत् इति न ऊहितवती आसम् । वराः ये सन्ति ते वधूनिमित्तं रजतं, सुवर्णं च आनयन्ति । परन्तु एवं वध्वाः गृहे एव स्थित्वा तस्याः सम्पत्तेः नाशं तु न कुर्वन्ति'' इति उक्तवती पद्ममुखी ।

तदा दुर्बुद्धिः ताम् उक्तवान् - ''भवत्याः वचनं सत्यम् एव । वयम् अस्माकम् इच्छानुगुणं भवत्यै आभरणं दास्यामः । परन्तु भवती अस्मासु अन्यतमं यावत् पतिरूपेण न स्वीकरिष्यति तावत् वयम् इतः न गमिष्यामः'' इति ।

अनन्तरं सर्वेऽपि स्वकर्मकराणां द्वारा आभरणानि आनाय्य पद्ममुख्यै दत्तवन्तः । सा तानि आभरणानि दासीनां हस्ते दत्त्वा स्वप्रकोष्ठं गतवती । यदा सायङ्कालः जातः तदा सर्वेऽपि सुरां पिबन्तः विविधाः चेष्टाः कृतवन्तः ।

अनन्तरं विपुलयोधः - ''भवते उद्योगं दापयेयम् । परन्तु भवान् अतीव अलसः । कष्टेन कार्यं न करोति'' इति रूपधरस्य उपहासं कृतवान् ।

''बीजावापने, तृणकर्तने, कस्मिंश्चित् अन्यस्मिन् कार्ये वा स्पर्धाम् आयोजयिष्यामः । तदा कः अधिकं कार्यं करोति इति ज्ञायते । भवान् केवलवाचालः अस्ति । सः रूपधरः आगमिष्यति चेत् भवतः परिस्थितिः ज्ञायते'' इति विपुलयोधम् उक्तवान् रूपधरः ।

रूपधरस्य वचनं श्रुत्वा अत्यन्तं कुपितः विपुलयोधः पीठं स्वीकृत्य रूपधरस्य उपरि क्षिप्तवान् । परन्तु रूपधरः पार्श्वे गतः इति कारणतः अन्यस्य ललाटे पीठस्य घट्टनं जातम् । सः उच्चैः आक्रोशनं कृतवान् । तत् दृष्ट्वा सर्वे हसितवन्तः ।

तदा धीरमतिः अधिकारस्वरेण - ''कः एषः कोलाहलः ? भवन्तः अधिकं पीत्वा मदोन्मत्ताः इव व्यवहरन्तः सन्ति । एतत् उचितं न । भोजनपानादिकं समाप्तम् अस्ति खलु ! इतः परं गत्वा शयनं कुर्वन्तु'' इति तान् उक्तवान् ।

तदा सर्वे उत्थाय गतवन्तः । ततः तस्मिन् प्रकोष्ठे रूपधरः, धीरमतिः च अवशिष्टौ ।

- (अनुवर्तते)



# र स वा र्ताः

## राजीवगान्धिवर्यस्य नाम

विद्यार्थिनः अक्षराणि, गणितसूत्राणि च दोषयुक्तानि लिखन्ति चेत् शिक्षकाः तानि परिष्कृत्य पुनः 'इम्पोजिषन्'रूपेण लेखयन्ति। परन्तु राजाशरीफनामकः त्रिंशद्वर्षीयः युवकः राजीवगान्धिवर्यस्य नाम आङ्गलभाषया ८,५०० वारं 'इम्पोजिषन्'रूपेण लिखितवान् । तत्रापि सामान्ये अन्तर्देशीयपत्रे । सः तस्मिन् पत्रे ९३,००० आङ्गलाक्षराणि लिखितवान् । सः एतत् समापयितुं प्रतिदिनं घण्टाद्वयं यावत् एकसप्ताहं स्वीकृतवान् । राजीवगान्धिवर्यस्य जन्मदिने आगस्ट् २० तमे दिनाङ्के सः एतत् कार्यम् आरब्धवान् आसीत् । एतां वार्तां सोनियागान्धिमहोदयां पत्रद्वारा सूचितवान् राजाशरीफ् । सोनियागान्धिः तत् पत्रं स्वीकृत्य राजीवगान्धिवर्यस्य भावचित्रस्य उपरि हस्ताङ्कनं कृत्वा तस्मै युवकाय प्रेषितवती ।

## अविरतं भरतनाट्यम्

सप्तविंशतिवर्षीया विद्याचन्द्रशेखरनामिका युवतिः विश्रान्तिं विना ७२ घण्टाः यावत् भरतनाट्यं कृत्वा नूतनविक्रमं सृष्टवती। हृदयरोगेण मृतस्य स्वपितुः स्मरणार्थं सा नाट्यप्रदर्शनं कृतवती । हृदयरोगविषये जनेषु जागृतिः उत्पादनीया इति तस्याः आशयः । अमेरिकादेशस्य मिचिगान्ट्रायन्नगरे आयोजितं नाट्यप्रदर्शनं ६०० जनाः दृष्टवन्तः । नाट्यसमाप्तिसमये तस्याः पादयोः शोथः आगतः आसीत् । सा नितरां शक्तिहीना अपि जाता आसीत् । "मम पिता पुनः न जीवेत् । परन्तु भवन्तः स्वपरिवारे सुखेन जीवेयुः इत्येव मम प्रार्थना" इति सा गद्गदस्वरेण प्रेक्षकान् उक्तवती । सा सप्तवर्षेभ्यः पूर्वं ४८ घण्टाः यावत् नाट्यं कृतवती आसीत् । तदा यत् धनं १०,००० डालर् मितं प्राप्तम् आसीत् तत् सर्वम् अमेरिकन् क्यान्सर् सोसैटि कृते दत्तवती आसीत् ।

## नाणकेषु देवतानां चित्रम्

नाणकानाम् उपरि पालकानां राज्ञां चित्रं यत् मुद्रापयन्ति तत्र किमपि वैशिष्ट्यं न भवति । विशेषसन्दर्भेषु गण्यव्यक्तीनां चित्राणि नाणकानाम् उपरि मुद्रापयेयुः । अस्माकं देशे महात्मा गान्धिः जवहारलालनेहरुवर्यः, इन्दिरागान्धिः, राजीवगान्धिः, डा।। अम्बेड्कर् इत्यादिनां नाणकानि विमोचितानि । आस्ट्रेलियादेशे द्वितीयराज्ञ्याः एलिजबेत्-महोदयायाः भावचित्रं नाणकेषु मुद्रापितवन्तः आसन् । इदानीं तस्मिन् देशे गणेशः, शिवः, पार्वती इत्यादिनां हिन्दुदेवतानां चित्राणि नाणकेषु मुद्रापितानि । पेर्त्नगरे स्थितायां टङ्कशालायाम् एतेषां नाणकानां मुद्रणकार्यं प्रचलत् अस्ति । सिद्धिविनायकस्य चित्रेण युक्तानि २०,००० सुवर्णनाणकानि मुम्बयीनगरे स्थिताय सुप्रसिद्ध-विनायकमन्दिराय अर्पितानि सन्ति ।

## लण्डन्नगरे हिन्दुदेवालयः

लण्डन्नगरे नेस्डेन् प्रान्ते इदम्प्रथमतया एकस्य हिन्दुदेवालयस्य निर्माणं क्रियमाणम् अस्ति । एतस्य शिखरस्य औन्नत्यं ७०,००० द्वादशाङ्गुलपरिमितम् अस्ति । वैशाल्यं च २७,१९५ द्वादशाङ्गुलपरिमितम् अस्ति । एतस्मिन् देवालये नारायणस्य मूर्तेः प्रतिष्ठापनं कृतम् अस्ति । एतस्य मन्दिरस्य निर्माणार्थं २६,००० शिलाः उपयुक्ताः इति श्रूयते । मन्दिरनिर्माणार्थम् आवश्यकयः सुधाशिलाः, अमृतशिलाः, कृष्णवर्णीयाः शिलाः च इटली-बल्गेरिया-भारतादिभ्यः देशेभ्यः आनायिताः । ताः शिलाः गुजरात्राज्यस्य काण्ड्लानौकास्थानं प्रति प्रेषयित्वा राजस्थानीयानां १,५०० शिल्पिनां द्वारा सुन्दराः स्तम्भाः, भित्तेः फलकानि, भूम्याः फलकानि च कारितानि । ततः तानि सर्वाणि नौकया इङ्ग्लेण्ड्देशं नीतानि च ।



# वेणुगानम्

अङ्गीकृतं कार्यं समापनीयम् एव इति दृढसङ्कल्पं कृत्वा त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा वृक्षे स्थितं शवम् अवतार्य स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् ।

तदा शवान्तर्गतः वेतालः अवदत् - ''भोः राजन् ! सुखमयम् अन्तःपुरवासं परित्यज्य कष्टं सहमानः भवान् श्मशानम् एव अपेक्षते । एतस्मात् अहं भावयामि यत् भवतः विचित्रं मनःस्सत्त्वम् अस्ति इति । महाराजः 'चक्रवर्ती भवेयम्' इति अपेक्षां करोति यत् निर्धनः कृषिकः भूस्वामी भवितुं परिश्रमं करोति यत् तत्र असहजं किमपि नास्ति । परन्तु केचन जनाः स्वबुद्धिमत्तया, देवकृपया वा अपेक्षायाः पूर्तिः यावत् भवति तावता एव ताः अपेक्षाः दूरीकुर्वन्ति । एषः मनोभावः तेषां जडत्वं, मनोवैकल्यं च द्योतयति । एतस्य

## वेतालकथा



उदाहरणत्वेन मोहननामकस्य कथां विस्तरेण श्रावयामि । मार्गायासस्य परिहारार्थं तां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

गोकुलपुरे मोहनः नाम कश्चित् युवकः आसीत् । सः गुरुकुले विद्याभ्यासं समाप्य गृहं प्रत्यागतवान् । तस्य पितुः मोहनः एकः एव पुत्रः । तस्य भूसम्पत्तिः अपि अधिका आसीत् । 'अध्ययनानन्तरं पुत्रः मम साहाय्यं करिष्यति' इति पिता दिवाकरः अपेक्षां कृतवान् आसीत् । परन्तु गुरुकुलात् प्रत्यागतः मोहनः पितुः साहाय्यं किमपि न कृतवान् एव । कृषिकार्येषु सर्वथा अनासक्तिः अनादरः च आसीत् तस्य । पितुः धनं व्ययीकुर्वन् मित्रैः सह विनोदेन कालं यापयति स्म सः ।

पुत्रस्य एतादृशेन व्यवहारेण खिन्नः दिवाकरः मासानन्तरं मोहनम् उक्तवान् - ''पुत्र ! आदिनं विना कार्यं भवान् किमर्थं समययापनं करोति ? मम अपि वयः जातम् । भवान् क्षेत्रकार्ये मम साहाय्यं करोतु'' इति ।

पितुः वचनं श्रुत्वा मोहनः - ''तात ! कृषिकार्यं महता कष्टेन कुर्मः चेदपि किं प्रयोजनम् ? कृषितः प्राप्यमाणः आयः अत्यल्पः एव । ततः न आतृप्ति भोजनं कर्तुं शक्यते, न वा सर्वविधाः अपेक्षाः पूरयितुं शक्यन्ते । अतः किम् एतादृशेन जीवनेन ? मह्यं मासं यावत् समयं ददातु भवान् । अहम् अरण्यं गत्वा तत्र तपः करिष्यामि । तत्रत्यानां मुनीनाम् आशीर्वादं प्राप्य प्रत्यागमिष्यामि । अनन्तरं वयम् अधिकां सम्पत्तिं प्राप्य सुखेन जीवनं करिष्यामः'' इति उक्तवान् ।

गुरुकुलस्य पठनकारणतः पुत्रस्य इच्छाः अधिकाः जाताः इति चिन्तयित्वा मोहनस्य पिता दिवाकरः अनन्यगतिकः सन् - 'तथैव भवतु' इति उक्तवान् । माता तु मौनेन सर्वं सोढवती ।

अनन्तरदिने प्रातः मोहनः भोजनं कृत्वा मार्गे खादनार्थं काश्चन रोटिकाः वस्त्रेण बद्ध्वा स्वीकृतवान् । गृहात् प्रस्थितवान् च। सः मध्याह्नसमये अरण्ये कस्यचित् सरोवरस्य समीपं गतवान् । तदा अनिरीक्षिततया कश्चित् वानरः वृक्षात् उत्पतितवान् । तस्य हस्ते रजतरेखायुक्तः विचित्रः वेणुः आसीत् ।

मोहनः आश्चर्यचकितः सन् वानरं यावत् पश्यन् आसीत् तावता सः वानरः वेणुं भूमौ स्थापयित्वा रोटिकां स्वीकृत्य ततः पलायितवान् ।



मोहनः कोपेन वानरं दृष्ट्वा तस्य गमनानन्तरं दीर्घं निःश्वस्य भूमौ पतितं वेणुं स्वीकृतवान् । सरोवरे जलं पीत्वा अग्रे प्रस्थितवान् च ।

किञ्चिद्दूरं यदा गतं तदा वृद्धः कश्चित् मुनिः तस्य पुरतः आगतवान् । सः दीर्घकेशी, श्वेतस्मश्रुधारी च आसीत् । तस्य नेत्रद्वयम् अपि प्रकाशमानम् आसीत् । मोहनः तस्य कान्तियुक्तं मुखं दृष्ट्वा प्रभावितः सन् तं वृद्धं साष्टाङ्गं नमस्कृतवान् ।

मुनिः मोहनम् आत्मीयतया उत्थापितवान् । मोहनः किमपि वक्तुं यावत् उद्युक्तः तावता मुनिः - ''वत्स ! अहं सर्वं जानामि । अत्रत्यानां मुनीनाम् आशीर्वादं प्राप्य भवान् स्वस्य अपेक्षाः पूरयितुम् इष्टवान् अस्ति । भवतः हस्ते स्थितः वेणुः सामान्यः नास्ति । तस्य महत्त्वम् अधिकम् अस्ति । तस्य वादनं यः करोति तं विहाय अन्ये श्रोतारः सर्वे निद्रां कुर्वन्ति । तत्र पशुपक्षिणः, राक्षसाः च अन्तर्भवन्ति । अन्यम् एकं विचारं वक्तुम् इच्छामि । मनुष्यस्य अपेक्षा तस्य शक्तिसामर्थ्यं, बुद्धिविवेकं च अतिक्रम्य न गच्छेत् । यदि तथा भवति तर्हि सः अन्येषाम् उपहासस्य अपमानस्य च पात्रतां प्राप्नोति । भवान् जागरूकः भवतु'' इति उक्त्वा ततः निर्गतवान् ।

मोहनः सन्तोषेण ग्रामं प्रति प्रस्थितवान् । ततः सः किञ्चिद्दूरं यदा गतवान् तदा कस्यचित् सिंहस्य गर्जनं श्रुतवान् । तत्र कश्चित् सिंहः हरिणस्य ग्रहणार्थं प्रयत्नं कुर्वन् आसीत् । तदा मोहनः कम्पमानः पार्श्वे एव स्थितं वृक्षम् आरूढवान् । तावति काले तेन हस्ते स्थितः वेणुः स्मृतः । अनुक्षणं सः वेणुवादनं कृतवान् । तत् श्रुत्वा सिंहः हरिणः च निद्रां कर्तुम् उद्युक्तौ ।

सः किञ्चित्कालं वेणुवादनं कृत्वा श्रमनिवारणार्थं क्षणं यावत् स्थगितवान् । तदा सिंहः हरिणः च जागरितौ । झटिति उत्थितः हरिणः धावनम् आरब्धवान् । धावन्तं हरिणम् अनुसृत्य सिंहः अपि अरण्यं प्रति धावितवान् ।




तावता एव महावटवृक्षस्य उपरिष्टात् काचित् राक्षसी आगत्य मोहनस्य पुरतः स्थितवती । तां राक्षसीं दृष्ट्वा मोहनः प्राणभयेन कम्पमानः अभवत् । तदा राक्षसी - "किं भोः ! मम तु महती बुभुक्षा अस्ति । भवान् वृथा कालहरणं मा करोतु । यदि भवान् शीघ्रम् अचेतनः भवति तर्हि भवन्तं खादित्वा बुभुक्षां निवारयिष्यामि" इति उक्तवती ।

तस्याः वचने किमपि रहस्यं स्यात् इति विचिन्त्य मोहनः धैर्येण - "अहम् अचेतनः न भविष्यामि चेत् भवती मां न खादिष्यति वा ?" इति पृष्टवान् ।

तदा राक्षसी दीर्घं निःश्वस्य - "एकदा अहं कश्चित् वृषभं खादित्वा तस्य अस्थिपञ्जरं स्वशक्त्या दूरे क्षिप्तवती । तत् कस्यचित् मुनेः आश्रमे पतितम् । तदा मुनिः कोपेन - 'सचेतनं यं कमपि प्राणिनं भवती खादति चेत् भवत्याः शिरः सहस्रधा भग्नं भविष्यति' इति शापं दत्तवान्" इति उक्तवती ।

अनुक्षणम् एव मोहनः स्वसमीपे स्थितम् वेणुं स्मृत्वा तं वादयितुम् उद्युक्तः अभवत् । तावता राक्षसी तं वेणुम् आकृष्य - 'अहोः सुन्दरः वेणुः' इति वदन्ती वादनम् आरब्धवती ।

तदा यथा वेणुनादः न श्रूयेत तथा हस्तद्वयेन कर्णौ गृहीतवान् मोहनः । एतत् दृष्ट्वा राक्षसी - "अवमानकरम् एतत् । अहं वेणुं वादयन्ती भवामि चेत् भवान् किमर्थं कर्णौ पिदधाति ? भवान् कथं वादयति इति द्रक्ष्यामि" इति वदन्ती वेणुं दूरे क्षिप्तवती ।

मोहनः 'अहं रक्षितः' इति चिन्तयन् वेणुम् उन्नीय वादितवान् । तदा राक्षसी 'अद्भुतम् ! अद्भुतम्!' इति उक्त्वा भूमौ पतित्वा निद्रां कृतवती ।

एषः एव पलायनार्थं सुसमयः इति विचिन्त्य मोहनः ततः धावितवान् । अनुक्षणम् एव जागरिता राक्षसी - "भोः ! तिष्ठतु, तिष्ठतु" इति उच्चस्वरेण वदन्ती तस्य पृष्ठतः धावितवती ।

तदा मोहनः सुन्दरीं काञ्चित् शिबिकां दृष्टवान् । तां शिबिकाम् उन्नीय चत्वारः आगच्छन्तः आसन् । दश रक्षकाः अपि तत्र आसन् । तान् सर्वान् दृष्ट्वा राक्षसी - "अदृष्टं नाम एवं भवेत् । एकं जनम् अनुसृत्य आगतया मया अद्य खादनार्थम् एतावन्तः जनाः प्राप्ताः" इति वदन्ती उच्चैः

हसितवती ।

राक्षस्याः हासध्वनिं श्रुत्वा शिबिकायाः जवनिकाम् अपसार्य काचित् सुन्दरी शिरः बहिः प्रसारितवती । तस्याः मुखं तु बहु सुन्दरम् आसीत् । तत् दृष्ट्वा मोहनः झटिति निर्णीतवान् यत् एषा एव मया परिणेतव्या इति ।

राक्षसीं दृष्ट्वा सर्वे भयेन कम्पमानाः आसन् । एककाले एव एतावन्तः जनाः प्राप्ताः इति सन्तोषेण हसन्ती राक्षसी एकैकं पदं स्थापयन्ती अग्रे आगतवती । पार्श्वे एव एकः कूपः आसीत् । किन्तु राक्षसी तं कूपं न लक्षितवती एव । तत्रैव स्थितस्य कूपस्य समीपं यदा सा आगतवती तदा मोहनः वेणुं वादितवान् ।

वेणोः ध्वनिं श्रुत्वा राक्षसी - 'अद्भुतम्, अद्भुतम्' इति वदन्ती निद्रामत्ता सती कूपे पतितवती । तस्मिन् समये एव रक्षकाः, अश्वाः, युवतिः चेति सर्वेऽपि निद्राम् आरब्धवन्तः । मोहनः वेणुवादनं स्थगितवान् । तत्क्षणमेव सर्वे निद्रातः जागरिताः इव उत्थितवन्तः । कूपे पतिता राक्षसी अपि जागरणं प्राप्य उच्चैः आक्रोशनं कृतवती ।

किं प्रवृत्तम् इति अजानतः रक्षकान् प्रवृत्तं सर्वं विवृतवान् मोहनः । "इदानीं राक्षसी कूपात् बहिः आगन्तुं न शक्नोति । भवन्तः के ? कुत्र प्रस्थितवन्तः ?" इति पृष्टवान् च ।

तदा रक्षकेषु कश्चन - "स्वामिन् ! अस्माकम् अदृष्टम् एव तथा अस्ति । वयं सूर्यगिरिराज्यीयाः । अस्माकं पार्श्वस्थस्य



मकरगिरिराज्यस्य महाराजः अस्माकं राज्यस्य उपरि आक्रमणं कृतवान् । सप्ताहं यावत् युद्धं प्रवृत्तम् । युद्धे अस्माकं सैनिकाः सहस्रशः मृताः । अस्माकं पराजयः निश्चितः इति ज्ञात्वा रहस्यमार्गेण अस्माकं युवराज्ञीम् आनयन्तः वयम् अत्र आगताः" इति उक्तवान् ।

मोहनः तान् स्वपरिचयम् उक्त्वा - "मां भवतां महाराजस्य समीपं नयन्तु । तेन सह युद्धतन्त्रविषये त्वरया चर्चा करणीया अस्ति" इति उक्तवान् ।

युवराज्ञ्याः अनुमतिं प्राप्य रक्षकाः मोहनेन सह स्वराजधानीं प्रति प्रस्थिताः । प्रातःकालाभ्यन्तरे ते राजधानीं प्राप्तवन्तः । रहस्यमार्गेण ते दुर्गं प्रविष्टवन्तः । रक्षकाः मोहनः च अन्तःपुरात् बहिः स्थितवन्तः ।



युवराज्ञी अन्तः गतवती । महाराजः आसने व्याकुलतया उपविष्टः आसीत् ।

पुत्रीं दृष्ट्वा आश्चर्यचकितस्य महाराजस्य प्रश्नात् पूर्वम् एव पुत्री अरण्ये प्रवृत्तं सर्वम् उक्त्वा - ''मोहननामकः युवकः युद्धे जेतुं मार्गं दर्शयामि इति उक्तवान् अस्ति । सः बहिः भवतः प्रतीक्षां कुर्वन् अस्ति'' इति उक्तवान् ।

सर्वं श्रुत्वा महाराजः उक्तवान् - ''कश्चित् सामान्यः मया सह युद्धतन्त्रविषये चर्चां कर्तुम् इच्छति ? कथं युज्यते एतत् ? युद्धतन्त्रविषये किं वा जानीयात् सः ? कः अनुभवः तस्य ? अथवा .... सः अन्तः आगच्छतु नाम । राक्षसीतः भवतः सर्वान् रक्षितवान् इति भवती वदति इत्यतः भाति यत् सः महावीरः एव स्यात् इति । तम् अन्तः प्रेषयतु'' इति ।

यदा मोहनः महाराजस्य पुरतः आगतवान् तदा महाराजः संशयेन तं दृष्ट्वा - ''भवान् युद्धतन्त्रं वदिष्यति इति अहं श्रुतवान् खलु । तत् किम् ?'' इति पृष्टवान् ।

राजकुमार्याः सौन्दर्येण परवशस्य मोहनस्य प्रबला इच्छा आसीत् यत् राजकुमारी एव परिणेतव्या इति । परन्तु ताम् इच्छां प्रकटीकर्तुं सः न शक्तवान् । अतः सः स्ववेणोः महत्त्वं महाराजं विवृण्वन् - ''महाराज ! मया सूच्यमानः उपायः अनुसृतः चेत् युद्धे वयं निश्चयेन जयं प्राप्स्यामः । तस्य प्रतिफलरूपेण मम काचित् अपेक्षा भवता पूरणीया । तथा भवान् वचनं ददातु'' इति उक्तवान् ।

महाराजः क्षणकालं यावत् मौनं स्थित्वा अनन्तरं शान्तस्वरेण - 'मोहन ! यदि मम शत्रवः पराजिताः भविष्यन्ति तर्हि भवता अहं, मम परिवारः, प्रजाः, सूर्यगिरिदेशः च रक्षिताः इव । तादृशस्य भवतः अपेक्षां निश्चयेन पूरयिष्यामि एव । तथा मम कुलदेवस्य पुरतः प्रतिज्ञां करोमि'' इति उक्तवान् ।

अनन्तरदिने यदा युद्धम् आरब्धं तदा युद्धभूमौ कस्मिंश्चित् रथे उपविष्टवान् मोहनः वेणुवादनम् आरब्धवान् । सूर्यगिरिमहाराजः, सेनाधिपतिः, अन्ये सैनिकाः च मोहनस्य पूर्वसूचनानुसारं कर्णयोः कार्पासं स्थापितवन्तः आसन् । अतः ते वेणुवादनं न श्रुतवन्तः । परन्तु मकरगिरिराजः, तत्सेनाधिपतिः, तत्सैनिकाः

च वेणुगानं श्रुत्वा परवशाः सन्तः निद्रितवन्तः ।

एषः एव उत्तमः समयः इति विचिन्त्य सूर्यगिरिसैन्येन शत्रुसैन्यं पराजितम् । सूर्यगिरिराजः मकरगिरिमहाराजं बन्धयित्वा कारागृहे स्थापितवान् । तस्मिन् दिने सायं मोहनस्य सम्मानसमारम्भे महाराजः, आस्थानपण्डिताः, नगरगण्याः, मन्त्रिणः च 'महाशूरः' इति मोहनं बहुधा श्लाघितवन्तः । परन्तु कश्चित् सेनाधिपतिः मौनं सर्वं पश्यन् आसीत् ।

अनन्तरं महाराजः युद्धात् पूर्वं मोहनाय दत्तं वाग्दानं स्मारयन् तम् उक्तवान् - ''अये वीराधिवीर ! भवता वयं रक्षिताः । देशश्च रक्षितः । यदि भवान् न स्यात् तर्हि प्रायः अस्माकं शोचनीया स्थितिः अभविष्यत् । अतः भवत्तः नितराम् उपकृताः वयम् । भवान् यत् इच्छति तत् दास्यामि । भवान् स्वस्य अपेक्षां वदतु'' इति ।

मोहनः विनयेन महाराजं नमस्कृत्य - ''महाराज ! मां क्षाम्यतु । मम अपेक्षाम् अहं श्वः भवन्तं वदिष्यामि'' इति वदन् अतिथिगृहं गतवान् ।

अनन्तरदिने सूर्योदयात् पूर्वम् एव उत्थाय सः महत्त्वपूर्णं स्ववेणुं भञ्जयित्वा दुर्गस्य परिखायां क्षिप्त्वा स्वग्रामं प्रति प्रस्थितवान् ।

एवं वेतालः कथां समाप्य - ''भोः राजन् ! मोहनः अरण्ये प्रथमवारं यदा युवराज्ञीं दृष्टवान् तदा तस्याः सौन्दर्येण परवशः सन् तां परिणेतुम् इष्टवान् । 'युद्धानन्तरं मम अपेक्षा पूरणीया' इति उक्त्वा महाराजात् वाग्दानम् अपि स्वीकृतवान् आसीत् सः । परन्तु यदा सभायां राजा - 'अपेक्षां वदतु' इति मोहनं सूचितवान् तदा मोहनः - 'श्वः वदिष्यामि'



इति उक्त्वा दुर्गम् एव त्यक्त्वा किमर्थं ग्रामं गतवान् ? तावत् एव न, महत्त्वपूर्णं वेणुं भञ्जयित्वा किमर्थं परिखायां क्षिप्तवान् सः ? अपेक्षापूरणस्य अन्तिमसमये तस्य तादृशव्यवहारस्य कारणं तस्य बुद्धिहीनता, उत मानसिकदौर्बल्यम् ? मम एतादृश-सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत् '' इति अवदत् ।

तदा त्रिविक्रमः - ''मुनेः आशीर्वादं प्राप्तुं यदा अरण्यं गतवान् ततः ज्ञायते यत् मोहनेन गुरुकुले अधीतया विद्यया जीवनस्य वास्तविकतां ज्ञातुं न शक्तम् इति । अरण्ये तेन मिलितः मुनिः अपि तस्य स्वभावं ज्ञात्वा एव - 'मानवस्य अपेक्षाः तस्य शक्तिसामर्थ्यम् अतिरिच्य न भवेयुः' इति जागरितवान् आसीत् । तदा एव मोहनः वेणोः महत्त्वं ज्ञातवान् । अनन्तरं सौन्दर्यवतीं युवराज्ञीं परिणेतुम् इष्टवान् मोहनः । शत्रूणां संहारात् पूर्वम् एव सः स्वापेक्षां महाराजम् उक्त्वा तस्मात् वाग्दानं स्वीकर्तुम् अशक्ष्यत् । परन्तु मुनेः वचनं सः न विस्मृतवान् आसीत् । सभायां सर्वे 'महाशूरः' इति यद्यपि तस्य श्लाघनं कुर्वन्तः आसन्, तथापि कश्चित् सेनाधिपतिः मौनी आसीत् । एतस्मात् मोहनेन स्वशौर्यं, सामर्थ्यं च कियत् इति ज्ञातम् । मन्त्रतन्त्रेण शत्रूणां निद्रां कारयित्वा तेषां संहारः यः क्रियते सः शौर्यद्योतकः न भवति । सः युद्धधर्मः अपि न इत्यपि सः ज्ञातवान् । शौर्यविहीनः राजकुमारीं परिणेतुं सर्वथा अनर्हः इति मोहनः जानाति स्म एव । यतः यः राजकुमारीं परिणेष्यति सः एव भाविनि काले राजा भविष्यति । राज्ञः शौर्यहीनता अशोभावहा देशस्य एव हानिकारणभूता च । एतस्मात् एव कारणात् सः राजकुमारीं परिणेतुं न इष्टवान् । वेणोः सदुपयोगः यथा तथा दुरुपयोगः अपि भवितुम् अर्हति इति विचिन्त्य मोहनः वेणुं क्षिप्तवान् । अतः तस्य व्यवहारे बुद्धिहीनता मानसिकदौर्बल्यं वा न दृश्यते । तथा च सः ज्ञानी इत्यपि वक्तुं शक्यते'' इति उक्तवान् ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा पुनः अपि वृक्षम् आरुह्य लम्बमानः स्थितवान् ।



# 'मलबार'तीरम्

रचना - मीरा नायर् ◆ चित्रम् - गोपकुमारः




यदि वयं मलबारतीरम् अनुसृत्य प्रयाणं कुर्मः तर्हि आदौ कोडङ्ङल्लूरुनामकं नौकास्थानं प्राप्नुमः, यच्च पूर्वं मुजरीस्नाम्रा प्रसिद्धम् आसीत् । एतत् नगरं 'क्राङ्गनूरु' इत्यपि निर्दिश्यते ।

प्राचीने काले फोनीषिया, ईजिप्ट्, अरेबिया, रोम् इत्यादिभ्यः प्रदेशेभ्यः आगताः वणिजः मुजरीस्नगरम् आगत्य स्वेन आनीतानि वस्त्राणि विक्रीय मरीचादीनि द्रव्याणि, वानर-व्याघ्र-शुक-गजादीन् प्राणिनः च क्रीत्वा स्वनगरं प्रति नयन्ति स्म ।

प्रायः २००० वर्षेभ्यः पूर्वं यादवाः ऐदम्प्राथम्येन एतं प्रदेशं प्रति आगतवन्तः । ५२ तमे क्रिस्ताब्दे अत्र आगतः सेण्ट्थामस् केरलराज्ये ऐदम्प्राथम्येन क्रैस्तमतप्रचारम् आरब्धवान् । इस्लांमतम् अङ्गीकृतवत्सु अन्तिमः राजा पेरुमाळ् ८०० तमे क्रिस्ताब्दे अत्र एकं यवनमन्दिरं निर्मितवान् । काष्ठैः शिलाभिः च युक्तं, मृच्छदैः आवृतं च एतत् यवनमन्दिरम् आडम्बररहितम् अस्ति । एतस्य गोपुरादिकं नास्ति । एतत् मक्कानगराभिमुखं नास्ति, किन्तु उत्तराभिमुखम् अस्ति । केरलराज्यस्य अन्येषु आलयेषु इव एतस्मिन् अपि महान् कांस्यदीपः सदा ज्वाल्यते ।

अत्रत्यस्य कालिकालयस्य कारणतः एतत् नगरं हिन्दूनां दृष्ट्या अपि पवित्रतमम् एव । अत्रत्याः जनाः भावयन्ति यत् देवालयस्था भद्रकाली केरलतीरं संरक्षति इति ।

१९४१ तमे वर्षे पेरियार्नद्यां यः महापूरः आगतः तस्य कारणतः कोडङ्ङल्लूरु-नौकास्थानस्य मुखद्वारं पिहितं जातम् ।


अतिप्राचीनं यवनमन्दिरम्



तदनन्तरकाले तत् वाणिज्यादिनिमित्तम् अनुपयोगि जातम् । पेरियार्नदी स्वमार्गं परिवर्त्य कोच्चिसमीपे समुद्रेण सङ्गता जाता । एतेन नूतनस्य नौकास्थानस्य उत्पत्तिः जाता ।

प्रपञ्चे स्थितेषु अतिसुन्दरेषु नौकास्थानेषु कोच्चिनौकास्थानम् अपि अन्यतमम् । 'अरेबियासमुद्रस्य राज्ञी' इति निर्दिश्यते एतत् नौकास्थानम् । ऋतुभेदात् वायुविकोपात् च अत्र विशेषरक्षणं प्राप्यते ।

अन्यैः कैश्चित् द्वीपैः मिलितः प्रधानभूभागः कोच्चिनौकास्थानस्य निर्माणम् अकरोत् । अत्रत्येषु द्वीपेषु विल्लिङ्ङ्डन्द्वीपः, बोलाघट्टद्वीपः, वैपिन्द्वीपः च प्रसिद्धः । वैपिन्द्वीपे चीनादेशीयानि मीनग्रहणजालानि आकाशे लम्बमानानि दृश्यन्ते ।

चीनादेशीयस्य कुब्लाय्खानस्य आस्थानात् आगताः वणिजः ऐदम्प्राथम्येन चीनादेशीयानि मीनग्रहणजालानि अत्र उपयुक्तवन्तः । दीर्घयोः दण्डयोः अग्रभागे स्थितं जालं जले मज्ज्यते । यदा तत् मीनैः पूर्णं भवति तदा तस्य उन्नयनार्थं षट् दृढकायाः पुरुषाः आवश्यकाः भवन्ति ।

कोच्चिदुर्गं, यच्च नौकास्थानस्य पार्श्वे प्रधानभूभागे अस्ति, युरोपियन्जनैः ऐदम्प्राथम्येन भारते निर्मितं दुर्गम् इति परिभाव्यते ।

१५१० तमे वर्षे पोर्चुगीस्जनैः निर्मितं सेण्ट्फ्रान्सिस्-क्रैस्तमन्दिरम् अस्मद्देशे स्थितेषु युरोपियन्क्रैस्तमन्दिरेषु अतिप्राचीनम् । १५२८ तमे वर्षे वास्को डि गामः यदा दिवङ्गतः तदा तदीयः शवः अत्रैव निखातः इति श्रूयते । क्रैस्तमन्दिरस्य दक्षिणपार्श्वे स्थितं तदीयं शवस्थानम् अद्यापि द्रष्टुं शक्यम् । तदीयं कलेवरं तु १५३८ तमे वर्षे तस्य पुत्रः



*सेण्ट्फ्रान्सिस्क्रैस्तमन्दिरम्*

पोर्चुगल्देशं प्रति नीतवान् आसीत् ।

कोच्चिनौकास्थानात् दक्षिणदिशि स्थितं मट्टञ्चेरि केरलीययहूदानां वासस्थानम् । अत्रत्याः बहवः इस्रेल्देशं प्रति गताः इत्यतः तेषां सङ्ख्यायां विशेषह्रासः जातः । चतुर्थे क्रिस्ताब्दे अत्र यहूदीयवसतिप्रदेशः निर्मितः । ४३० वर्षेभ्यः पूर्वम् अत्र 'परदेशीयसिन्साग्'नामकं यहूदीयमन्दिरं निर्मितम् । १८ शतके निर्मितः घटीस्तम्भः एतस्मिन् आलये विराजते ।

आलयात् अनतिदूरे द्व्यट्टात्मकः 'मट्टञ्चेरिप्रासादः' अस्ति । अत्रत्यासु भित्तिषु रामायण-महाभारतादीनां कथायाः चित्राणि चित्रितानि दृश्यन्ते । अत्रत्ये सङ्ग्रहालये महाराजैः उपयुक्ताः शिबिकाः, राजवस्त्राणि, आभरणानि च सन्ति ।

एषः प्रासादः यद्यपि डच्प्रासादः इति उच्यते, तथापि एषः डच्जनैः निर्मितः तु न । आत्मना यानि दुर्गाणि नाशितानि तेषां निमित्तं कोच्चिराजाय पोर्चुगीस्जनैः एषः प्रासादः दत्तः । ततः डच्जनाः एतस्य ऊर्ध्वभागं परिवर्त्य डच्शैल्या पुनः निर्मितवन्तः ।



*मट्टञ्चेरिप्रदेशे नौकाचालनरतः नाविकः*

एतस्य भवनस्य भूमिः अमृतशिलाभिः निर्मिता इव भासते । वस्तुतः तु तत्र अमृतशिलाः न उपयुक्ताः एव । दग्ध-नारिकेलावरणानि, कृष्णाङ्गारान्, सुधाम्, अण्डावरणानि च संयोज्य प्राप्तेन मिश्रणेन अत्रत्या भूमिः निर्मिता । एतादृशः निर्माणक्रमः पूर्वं केरलराज्ये प्राचुर्येण आसीत् । इदानीं तु अतिविरलतया दृश्यते । एतेन क्रमेण निर्मिताः भूमयः प्राचीनेषु केषुचित् भवनेषु दृश्यन्ते ।

कोच्चितः कोल्लंनगरं यावत् समुद्रतीरे जलाशयाः समुद्रजलसरांसि च बहुधा दृश्यन्ते । कोच्चितः अलप्पुळापर्यन्तं ७४ चतुरस्रमैल्विस्तीर्णतायुक्तं 'वेम्बनाडु'सरः प्रसृतम् अस्ति । केरलराज्ये स्थितेषु सरस्सु एतत् एव सुविशालम् ।

अगस्ट्-सप्टम्बर्मासयोः प्रचलन्ती 'चन्दनवळ्ळं'नामिकां नौकास्पर्धां द्रष्टुम् अलप्पुळसरस्तीरं प्रति असङ्ख्याः जनाः आगच्छन्ति । चञ्च्वाकारकेण अग्रभागेन युक्तां १३० द्वादशाङ्गुलदीर्घां नौकां शताधिकाः जनाः चालयन्ति । प्रतिवर्षम् अगस्ट्मासस्य १५ दिनाङ्के स्वातन्त्र्यदिनोत्सवस्य अङ्गतया 'नेहरूस्मारकनौकास्पर्धा' महता वैभवेन प्रचलति । भारतस्य प्रथमप्रधानमन्त्री जवाहरलालनेहरूवर्यः यदा ऐदम्प्राथम्येन अत्र आगतवान् तदा अलप्पाळ्समीपस्थस्य कुट्टनाडु - (केरलधान्यागारम् इति एतस्य पदस्य अर्थः) प्रदेशस्य जनाः तस्य सम्मुखे एतादृशीं स्पर्धाम् आयोजितवन्तः आसन् । तां दृष्ट्वा नितरां सन्तुष्टः नेहरूवर्यः रक्षणव्यवस्थाम् अपि उपेक्ष्य जयं प्राप्तवत्यां नौकायाम् उपविश्य अलप्पाळ्पर्यन्तं विहारं कृतवान् आसीत् । ततः देहलीं गतः सः एकं रजतस्मृतिफलकं सम्प्रेष्य तत्कालीनं मुख्यमन्त्रिणं सूचितवान् आसीत् यत् स्पर्धायां विजेत्रे गणाय एतत् फलकं दातव्यम् इति, प्रतिवर्षम् अत्र एतादृशी स्पर्धा सञ्चालनीया इति च ।

'चन्दनवळ्ळं'नामिका नौकास्पर्धा





# मारुतिकविः

विन्ध्याचल-पालिराज्ययोः केचन ग्रामाः समुद्रतीरस्य समीपे आसन् । अतः ते ग्रामाः चण्डमारुतेन, अधिकवायुना वा पुनः पुनः हानिम् अनुभवन्ति स्म । तान् ग्रामान् परितः विद्यमानेषु अरण्येषु कदाचित् दावानलः उत्पन्नः, ग्रामाः दग्धाः जाताः च । एतस्मात् कष्टात् ग्रामस्थाः यावत् मुक्ताः अभवन् तावति काले अतिवृष्टिरूपम् अन्यत् कष्टम् उपस्थितम् अभवत् । अतः ग्रामीणाः महतीम् हानिम् अनुभूतवन्तः ।

ग्रामीणानाम् एतत् कष्टं दृष्ट्वा नितरां खिन्नः तत्प्रदेशीयः भूस्वामी अशोकवर्मा - 'ग्रामीणानाम् एतत् कष्टं कथञ्चित् निवारणीयम् । इतः परं ग्रामे एतादृशी स्थितिः यथा न उत्पद्येत तथा किमपि करणीयम् । एतदर्थं महान् व्ययः करणीयः भवेत् कदाचित् । भवतु नाम' इति निश्चित्य ग्रामप्रमुखाणां गोष्ठीम् आयोज्य विषयम् उपस्थापितवान् ।

तस्मिन् समये तत्र उपस्थितः ज्योतिषिकः भूस्वामिनम् उक्तवान् - ''प्रभो ! प्रकृतेः विरुद्धं वयं किमपि कर्तुं न शक्नुमः । भूमिः, जलं, वायुः, अग्निः, आकाशः च पञ्च भूतानि सन्ति । अस्माकं देशे अपि एतानि सन्ति एव । वायुकुमारः हनुमान् अस्माकं रक्षकः अस्ति । तस्य स्मरणार्थम् एकस्य विग्रहस्य प्रतिष्ठापनं कृतं चेत् अस्माकं हितं भवेत् । हनुमान् अस्मान् रक्षेत्'' इति ।

भूस्वामी ज्योतिषिकस्य अभिप्रायम् अङ्गीकृतवान् । सः अनुक्षणम् एव हनुमतः विग्रहप्रतिष्ठापनार्थम् उत्तमं स्थलं चितवान् । तत्र फलवृक्षान् पुष्पसस्यानि च वर्धयित्वा सुन्दरम् उद्यानं करणीयम् इति आदिष्टवान् । अल्पे एव काले तत् स्थलं



सुन्दरोद्यानरूपेण परिवृत्तं जातम् । तत्र जनानाम् आकर्षणार्थं वृक्षसम्पत्तिभिः सह उत्साः अपि निर्मिताः आसन् । प्रकृतेः प्रकोपस्य निवारणार्थं तस्मिन् वने हनुमतः विग्रहस्य प्रतिष्ठापनम् अपि प्रवृत्तम् ।

तस्मिन् स्थले एव एकस्य मन्दिरस्य निर्माणम् अपि कारितवान् भूस्वामी । मन्दिरस्य उद्घाटनदिने भूस्वामिना सह ग्रामस्थाः सर्वे तत्र आगताः । सुन्दरे तस्मिन् वने हनुमन्तम् उद्दिश्य स्वरचितानि पद्यानि उक्तवन्तः केचन कवयः । केचन हनुमतः भजनं कृतवन्तः ।

अनन्तरं भूस्वामी जनान् उक्तवान् - "एकस्मिन् दिने सुन्दरकाण्डस्य पारायणं वयं सर्वे मिलित्वा करिष्यामः । अतः भवन्तः सर्वे अधिकसंख्यया रामायण-पुस्तकं स्वीकृत्य आगच्छन्तु" इति ।

तस्मिन् समये कश्चित् उच्चैः रोदनं कुर्वन् - "भवितव्यं भवेत् एव । देवः रुष्टः, दुष्टः च अस्ति । सुन्दरकाण्डपठनेन हनुमान् सन्तुष्टः न भवति । अहं रामायणस्य सुन्दरकाण्डं पद्यरूपेण रचितवान् अस्मि । तथापि एतेषु दिनेषु आगतायां महत्यां वृष्ट्यां तत् सर्वं नष्टं जातम्" इति उच्चस्वरेण आक्रन्दनं कृतवान् ।

तदा भूस्वामी तं स्वसमीपम् आहूय - "प्रकृतिः पञ्चभूतैः निर्मिता अस्ति । तेषु पञ्चभूतेषु अन्यतमस्य जलस्य कोपः कथञ्चित् आगतः । तस्य कारणतः न केवलं भवान्, अपि तु समग्रः ग्रामः एव हानिम् अन्वभवत् । अतः गतस्य विषये अलं चिन्तया । भवान् पुनः सुन्दरकाण्डं लिखतु । तदर्थम् अहं धनव्यवस्थां करिष्यामि । पञ्चभूतेषु अन्यतमः सः वायुपुत्रः यथा सर्वेभ्यः सन्तोषं दद्यात् तथा तत्र तस्य श्लाघनं कृत्वा पद्यानि लिखतु" इति उक्तवान् ।

भूस्वामिनः एतत् वचनं श्रुत्वा सः कविः लज्जाम् अनुभवन् - "स्वामिन् ! अहं कश्चन कविः इत्येव विस्मृतवान् आसम् । मया रामायणं सुन्दरकाण्डान्तं यावत् लिखितम् आसीत् अपि । अतिवृष्टिकारणतः मम समग्रः प्रयत्नः व्यर्थः जातः इत्यतः अहं विवेकहीनः सन् भगवन्तं निन्दितवान् । नष्टस्य पुनर्लेखनं शक्यते इत्येव विस्मृतम् आसीत् मया । मां क्षाम्यतु कृपया । भवता निर्मितम् एतत् वनं मधुवनं भवेत् । पञ्चभूतेषु अन्यतमात् चतुर्थभूतात्

जन्म प्राप्तवान् आकृतिविशेषः पञ्चमद्वितीयभूतयोर्मध्ये स्थितं दूरं क्रान्त्वा प्रथमभूतसन्तानं धैर्यम् उक्त्वा, तृतीयभूतस्य स्नेहं सम्पाद्य कोलाहलं सृष्ट्वा पुनः पञ्चमद्वितीयभूतयोर्मध्ये स्थितं दूरं क्रान्त्वा प्रथमभूतसन्तानस्य सन्तोषं जनयित्वा अस्मिन् मधुवने उपस्थाय, भवतां शुभं करोतु'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा आस्थानकविः उत्थाय - ''अहो ! भवतः पद्यम् अपूर्वम् अस्ति । भवान् अत्र अस्ति इति कारणतः अस्माकम् अपि गौरवं वर्धते । पञ्चभूतानां द्वारा सुन्दरकाण्डं भवान् परिचायितवान् । भवतः वाक्चातुर्यं श्लाघनीयम् एव'' इति उक्तवान् ।

अनन्तरं सः कविः जनान् उद्दिश्य पद्यस्य भावार्थम् उक्तवान् - ''पञ्चभूतेषु भूमिः प्रथमा, द्वितीयं जलं, तृतीयः अग्निः, चतुर्थः वायुः, पञ्चमः आकाशः च अस्ति । चतुर्थभूतस्य वायोः पुत्रः हनुमान् द्वितीयपञ्चमभूतयोर्मध्ये, तन्नाम समुद्रजलाकाशयोर्मध्ये, उड्डयनं कुर्वन् लङ्कां प्राप्तवान् । प्रथमभूतसन्तानभूतां भूम्याः पुत्रीं सीतां समाश्वस्य, तृतीयभूतस्य अग्नेः साहाय्येन सः लङ्कादहनं कृतवान् । अनन्तरं पुनः समुद्राकाशयोर्मध्ये डयमानः सीतायाः सन्तोषं जनयन् वालिना निर्मितं मधुवनम् आगतवान् । सः हनुमान् भवतां शुभं करोतु इति एतस्य कवेः आशयः । एषः सुन्दरकाण्डं चातुर्येण निरूपितवान् अस्ति'' इति उक्तवान् । एतत् श्रुत्वा सर्वे करताडनं कृतवन्तः ।

भूस्वामी तस्य जनस्य समीपं गत्वा- ''महाकवे ! सः मारुतिः एव भवतः मुखात् सुन्दरकाण्डस्य वर्णनं कारयित्वा, पुनः सुन्दरकाण्डं लिखतु इति आज्ञापितवान् अस्ति । राज्यं, राजानः च कदाचित् नश्येयुः नाम । किन्तु कविकृतिः चिरस्थायिनी भवति । अद्यारभ्य भवन्तं मारुतिकविः इत्येव आह्वयामः । भवान् सुन्दरकाण्डं रचयित्वा अस्माकम् अपि कीर्तिं वर्धयतु'' इति उक्तवान् ।

अनन्तरदिनेषु मारुतिकविः सुन्दरकाण्डं रचितवान् । प्रजानाम् आदराभिमानं प्राप्य भूस्वामिनः प्रशंसापात्रम् अपि अभवत् सः ।



# परोपकारः

विद्यारण्यपुरे कस्मिंश्चित् प्रसिद्धे गुरुकुले बहवः विद्यार्थिनः अध्ययनं कुर्वन्ति स्म । तत्र श्रद्धया ये अध्ययनं कुर्वन्ति स्म तेषु केचन वा महाराजस्य आस्थाने उद्योगं प्राप्नुवन्ति स्म ।

एकदा गुरुः विद्यानन्दः परोपकारस्य महत्त्वं विद्यार्थिनः उद्दिश्य विवृण्वन् - ''उदाहरणार्थं केचन वृद्धाः मार्गे सञ्चरद्भ्यः वाहनेभ्यः भीताः सन्तः मार्गं क्रान्तुं न शक्नुवन्ति । तादृशानां साहाय्यकरणं पुण्यकार्यं भवति'' इति उक्तवान् ।

तदनन्तरदिने चत्वारः विद्यार्थिनः विलम्बेन गुरुकुलम् आगतवन्तः । तदा गुरुः - ''किमर्थं विलम्बः जातः ?'' इति पृष्टवान्

तदा ते उक्तवन्तः - ''गुरुवर्य ! अस्माकम् अत्र आगमनसमये कश्चित् वृद्धः मार्गपार्श्वे स्थितवान् आसीत् । वयं चत्वारः अपि मिलित्वा तं मार्गस्य अपरं पार्श्वं प्रापय्य आगतवन्तः'' इति ।

''तथा वा ? महान् सन्तोषः । एकं वृद्धं मार्गं क्रामयितुम् एकः पर्याप्तः किल । भवन्तः चत्वारः किं कृतवन्तः ?'' इति गुरुः पृष्टवान् ।

''सः वृद्धः - 'मार्गं न क्राम्यामि' इति पुनः पुनः वदति स्म । किन्तु वयं तत् वचनम् अशृण्वन्तः इव व्यवहरन्तः सम्भूय तम् उन्नीय मार्गपार्श्वं नीतवन्तः'' इति विद्यार्थिनः उक्तवन्तः ।

तेषां वचनं श्रुत्वा गुरुः दिङ्मूढः जातः ।





चन्दमामायाः

# सुवर्णसमयः

## अतिमहती मृगया

चारित्रिकपूर्वयुगस्य मानवः ग्रूनामकः बलेन स्वस्य शिलायुधं प्रयुक्तवान् ।
















# सुवर्ण-समयस्य प्रश्नावली



1 स्काट्ल्याण्ड्देशे कस्मिंश्चित् सरोवरे कश्चन विचित्रः भीकरः मृगः वसति इति श्रूयते । तस्य दर्शनार्थं तद्देशीयाः जनाः सहस्राधिकवर्षेभ्यः प्रयत्नं कुर्वन्तः एव सन्ति । एवं तर्हि तस्य मृगस्य नाम किम् ?



2 टिबेट्देशीयाः हिमालयारोहिणः च केचन वदन्ति यत् हिमपर्वते कुत्रचित् अर्धपशुमानवरूपः विचित्रः कश्चन आकारः दृष्टः इति । तस्य विचित्रजीविनः नाम किम् ?



3 नौकाः विमानानि चापि अट्लाण्टिक्महासमुद्रस्य कस्यचित् प्रदेशस्य समीपं कदापि न गच्छन्ति । यतः तथा गतवतां नौकाः विमानानि वा अदृश्यतां गच्छन्ति इति वार्ता श्रूयते । एवं तर्हि तस्य प्रदेशस्य नाम किम् ?

4 पक्षिणाम् अस्थिपञ्जराणि किमर्थं न्यूनभारयुक्तानि भवन्ति ?



5 मनुष्यस्य कण्ठभागे सप्त अस्थीनि भवन्ति । चित्रोष्ट्रस्य (जिराफे) कण्ठभागे कति अस्थीनि भवेयुः ?



6 एड्गार्वार्नामकेन रचितस्य कथाग्रन्थस्य आधारेण निर्मितं तत् चलनचित्रं किं, यस्मिन् च भयङ्करः कश्चन 'गोरिल्ला'जीवी न्यूयार्क्नगरस्य मार्गेषु धावति ?



7 कः पक्षिणी अतिमहत् अण्डं प्रसूते ?





8 सदासञ्चारशीलाः षार्क्मीनाः कदा सञ्चारं स्थगयन्ति ?

# निर्मीयतां राक्षसगोधिकायाः कट् औट्

विशीलीकृतस्य उपरितन-चित्रस्य प्रतिकृतिं दृढपत्रे अङ्कयन्तु । चित्रे यथा दृश्यते तथा बिन्दुरेखां लघुरेखाः चापि अङ्कयन्तु । ततः चित्रेतरभागं कर्तयित्वा अपनयन्तु । वर्णेन चित्रम् अलङ्कुर्वन्तु । इदानीं पुटीकरणार्थं भवतां चित्रं सिद्धम् अस्ति ।
पुटीकरणात् पूर्वं बिन्दुरेखायाः उपरि कर्तरीशिखाग्रेण रेखाः कुर्वन्तु, येन पुटीकरणे सौलभ्यं स्यात् ।
अनन्तरं बिन्दुरेखाम् (.....) अनुसरन्तः पुटीकुर्वन्तु । पुटीकरणसमये रेखायुक्तः भागः बहिः यथा भवेत् तथा कुर्वन्तु । तन्नाम पुटीकरणानन्तरम् अपि ताः बिन्दुरेखाः दृष्टिगोचरतां यान्तु ।
एतदनन्तरं लघुरेखाः अनुसरन्तः पुटीकुर्वन्तु । एतत्सन्दर्भे ताः यथा न दृश्येरन् तथा पुटीकरणीयम् । ततः पुच्छभागं (चित्रे यथा दर्शितं तथा) पुटीकृत्य पुच्छस्य स च भागः निर्यासेन संयोजनीयः, यत्र च रक्तवर्णता दृश्यते ।





# महाभारतम्

मैत्रेयस्य गमनानन्तरं "किम्मीरस्य वधः कथं जातः" इति धृतराष्ट्रः विदुरं पृष्टवान् । विदुरः तं वृत्तान्तम् एवं विवृतवान्–

वनवासार्थं प्रस्थिताः पाण्डवाः दिनत्रयं यावत् प्रयाणं कृत्वा अर्धरात्रे वने गच्छन्तः आसन् । तस्मिन् वने एव किम्मीरः वसति स्म । किञ्चिद्दूरं यदा गतं तदा कश्चित् भयङ्करः राक्षसः मुखम् उद्घाट्य हस्तौ प्रसार्य अट्टहासं कुर्वन् तेषां पुरतः स्थितवान् । तस्य रक्तवर्णीये नेत्रे, श्वेतवर्णीये दंष्ट्रे, शिरसि स्थिताः केशाः, कृष्णवर्णीयं शरीरं च द्रष्टृषु भयं जनयन्ति स्म । तस्य आक्रोशं श्रुत्वा प्राणिनः अपि भीत्या धावितवन्तः । तस्य हस्ते ज्वलन्ती पञ्जिका आसीत् ।

पाण्डवाः, तेषां पृष्ठतः स्थिताः ब्राह्मणाः, द्रौपदी च तं राक्षसं दृष्टवन्तः । द्रौपदी तु भयेन नेत्रे निमीलितवती । आचार्यः धौम्यः राक्षसस्य नाशनार्थं मन्त्रोच्चारणं कृतवान् ।

धर्मराजः तं राक्षसं पृष्टवान् - "भवान् कः ? किमर्थं भवान् एतस्मिन् वने वसति ?" इति ।

तदा राक्षसः उक्तवान् - "अहं बकासुरस्य अनुजः किम्मीरः । काम्यकवने अहं स्वेच्छया सञ्चरन् अस्मि । अहं मानवान् मारयित्वा खादामि इति कारणतः मानवाः अत्र न आगच्छन्ति एव । तत् भवतु नाम । भवन्तः किमर्थम् अत्र आगताः ? अहम् इदानीम् एव भवतः सर्वान् खादिष्यामि" इति ।

धर्मराजः तम् उक्तवान् - "वयं पाण्डवाः । मम नाम धर्मराजः । एते मम चत्वारः सहोदराः । विधेः अनन्तलीलया वयम् एतादृशीं परिस्थितिं प्राप्तवन्तः स्मः ।



दुष्टः एतत् वनम् आगत्य इदानीं मम हस्तं गतः अस्ति । एतस्य रक्तं बकहिडिम्बादिभ्यः अर्पयामि । भवतां पुरतः एव एतस्य रक्तं पीत्वा मांसं च खादित्वा प्रतीकारं साधयामि'' इति उक्तवान् ।

तदा धर्मराजः महता कोपेन - ''भोः दुष्ट ! तूष्णीं तिष्ठतु'' इति उक्तवान् ।

भीमः कञ्चित् वृक्षं स्वीकृत्य किम्मीरेण सह युद्धार्थम् उद्युक्तः । अर्जुनः अपि गाण्डीवं स्वीकृत्य, बाणं योजयित्वा युद्धार्थं सिद्धः अभवत् ।

तदा भीमः अर्जुनं निवारयन् - ''अर्जुन ! भवान् तिष्ठतु । एतं दुष्टम् इदानीम् अहम् एव यमपुरीं प्रेषयिष्यामि'' इति वदन् हस्ते स्थितं वृक्षं किम्मीरस्य उपरि क्षिप्तवान् ।

बलवान् अपि मानवः विधिनियमं परिवर्तयितुं न शक्नोति । देवाः अपि विधिनियमेन बद्धाः दृश्यन्ते । एवं स्थिते सामान्यमानवानाम् अस्माकं का कथा ? विधिविलसितं नितरां विचित्रं घोरं च । ये विधिशापेन ग्रस्ताः भवन्ति ते एव तस्य घोरताम् अवगन्तुं शक्नुवन्ति । सर्वं पूर्वजन्मनः कर्मणः फलम् । वयं केनचित् नियमेन बद्धाः स्मः इदानीम् । अतः वनवासार्थम् अत्र आगताः स्मः'' इति ।

तत् श्रुत्वा किम्मीरः - ''एवं वा ? एषः एव वा भीमः नाम ? एषः भीमः मारणीयः इति बहुकालतः अहं प्रतीक्षमाणः आसम् । एषः मम अग्रजं बकं मारितवान् । मम मित्रं हिडिम्बं मारयित्वा, तस्य अनुजां हिडिम्बां परिणीतवान् अस्ति । एषः बुद्धिविहीनः

किम्मीरः एतस्मात् भीतः सन् स्वहस्ते विद्यमानां पञ्जिकां भीमस्य उपरि क्षिप्तवान् । भीमः तां पञ्जिकां वामपादेन निवारितवान् । अनन्तरम् उभौ अपि एकैकं वृक्षम् उत्पाट्य परस्परं प्रहरन्तौ युद्धं कृतवन्तौ । शिलाखण्डैः परस्परं ताडितवन्तौ । एवं भीकररूपेण उभौ अपि युद्धं कृतवन्तौ ।

अल्पे एव काले भीमेन ज्ञातं यत् राक्षसस्य शक्तिः न्यूना जायमाना अस्ति इति । अतः सः किम्मीरं हस्ताभ्यां सुदृढं गृहीत्वा उपरि उन्नीय, वेगेन भ्रामयित्वा बलात् अधः पातितवान् । तस्य उदरस्य उपरि पादं स्थापयित्वा सिंहगर्जनं कुर्वन् तस्य शिरः, पादौ च गृहीत्वा भग्नं कृतवान् । तदा राक्षसः भयङ्करम् आक्रोशनं

कुर्वन् मृतः जातः । भीमः तस्य शवं दूरे क्षिप्तवान् ।

एतस्मात् अरण्ये सर्वेऽपि राक्षसभीतितः मुक्ताः अभवन् । अनन्तरं सर्वे पाण्डवाः द्रौपदी, धौम्यः च भीमं महता सन्तोषेण श्लाघितवन्तः ।

विदुरस्य मुखात् सर्वं वृत्तान्तं श्रुत्वा धृतराष्ट्रः दीर्घं निःश्वसितवान् । शिरः अवनमय्य चिन्ताक्रान्तः अभवत् च ।

पाण्डवाः द्यूते पराजिताः इति वार्तां श्रुत्वा यादवाः, पाञ्चालाः च तान् द्रष्टुम् अरण्यम् आगतवन्तः ।

यादवैः सह आगतः कृष्णः अश्रूणि स्रावयन् कोपेन - ''पापिभिः दुश्श्यासन-शकुनि-कर्णादिभिः कृतम् अन्याय्यं नितरां निन्द्यम् । तथापि भवन्तः सहनया तत् सर्वं सोढवन्तः । भवतां सहना अपूर्वा एव । धर्मानुयायिनां भवताम् एतादृशं कष्टम् आगतं यत् तत् तु नितरां खेदावहम् । एतादृशानां कष्टानां कारणीभूतानां तेषाम् अधर्मीयाणां मारणम् एव उचितम् । तान् सर्वान् मारयित्वा धर्मराजस्य राज्याभिषेकं करिष्यामः'' इति उक्तवान् ।

द्रौपदी दृष्टद्युम्नप्रभृतिभिः, पाञ्चालैः सह कृष्णस्य समीपम् आगत्य, कौरवैः कृतानि अपमानकराणि कृत्यानि उक्त्वा रोदनं कृतवती ।

कृष्णः तस्याः सान्त्वनं कुर्वन् - ''द्रौपदि ! भवत्याः अपमाननं ये दुष्टाः कृतवन्तः ते निश्चयेन नष्टाः भविष्यन्ति । भवती यावत् दुःखम् अनुभूतवती ततोऽपि अधिकं दुःखम् अनुभविष्यन्ति तेषां पत्न्यः । अचिरात् एव पाण्डवाः राजानः भविष्यन्ति । भवती राज्ञी भविष्यति'' इति उक्तवान् ।

अर्जुनः, द्रुपदः च द्रौपद्याः सान्त्वनं





कृतवन्तौ । अनन्तरं कृष्णः धर्मराजम् उक्तवान् - ''द्यूतक्रीडासमये यदि अहं द्वारकायाम् अभविष्यं तर्हि अपरिचितः इव तत्र आगत्य भवतां साहाय्यम् अकरिष्यम् । यदि अहं तत्र अभविष्यं तर्हि द्यूतम् एव न अभविष्यत् । दुर्योधनं सम्यक् बोधयेयम् । यदा अहं द्वारकां प्रत्यागतवान् तदा युयुधानः भवतां विषयं सर्वम् उक्तवान् । अनुक्षणम् एव अहं भवतः सर्वान् द्रष्टुम् आगतवान्'' इति ।

''तेषु दिनेषु भवान् द्वारकायां किमर्थं न आसीत् ? कुत्र गतवान् आसीत् ?'' इति कृष्णं पृष्टवान् धर्मराजः ।

''राजसूययागसमये शिशुपालम् अहं मारितवान् । अतः तस्य अनुजः साल्वः अस्मान् द्विषन् आसीत् । तस्मात् तेन सह युद्धं कर्तुं सौभनगरं गतवान् आसम्'' इति उक्त्वा कृष्णः तां युद्धवार्तां विस्तरेण निवेदितवान् -

''अहं राजसूययागसमये शिशुपालं मारितवान् इति वार्तां ज्ञात्वा साल्वः सौभनामकेन विमानेन आगत्य द्वारकायाः उपरि आक्रमणं कृतवान् । तदा अहम् इन्द्रप्रस्थनगरे आसम् । अतः उग्रसेनः साल्वेन सह युद्धं कर्तुं सैन्यं सज्जीकृत्य गदः, साम्बः इत्यादीन् नियोजितवान् । युद्धे प्रद्युम्नः पराक्रमेण साल्वसैन्यं छिद्रीकृतवान् ।

तावति काले अहम् इन्द्रप्रस्थतः द्वारकाम् आगतवान् । प्रवृत्तं सर्वं ज्ञात्वा - 'साल्वस्य मारणं यावत् न करिष्यामि तावत् द्वारकां न प्रवेक्ष्यामि' इति प्रतिज्ञां कृत्वा अहं युद्धार्थं प्रस्थितवान् । एतां वार्तां ज्ञात्वा साल्वः सौभविमानेन समुद्रतीरदिशि गतवान् । अहम् अपि तम् अनुसृत्य गतवान् । साल्वः स्वविमानं समुद्रस्य उपरि आकाशे स्थगयित्वा हसन् युद्धार्थं माम् आहूतवान् । सः अदृश्यरूपेण स्थित्वा युद्धं करोति स्म । तस्य आकारः, तदीयः रथः, अनुचराः वा मया न दृश्यन्ते स्म । अतः मया प्रयुक्ताः बाणाः तं न स्पृष्टवन्तः एव । परन्तु तेन प्रयुक्ताः बाणाः मम उपरि पतिताः ।

एतत् दृष्ट्वा विमाने स्थिताः साल्वस्य अनुचराः करताडनं कृतवन्तः । तं ध्वनिम् अनुसृत्य अहं बाणान् तस्यां दिशि प्रयुक्तवान् । एतस्मात् केचन मृताः । परन्तु विमानस्य साहाय्येन साल्वः मायायुद्धं

यशस्वितया समापितवान् । मम सारथेः दारुकस्य मनसि भावना आगता यत् अस्माभिः जयः न प्राप्येत इति ।

एतादृश्यां भीकरपरिस्थितौ कृतवर्मणा प्रेषितः कश्चित् दूतः मम समीपम् आगत्य - "साल्वः अदृश्यरूपेण द्वारकां प्रविश्य भवतः पितरं वसुदेवं मारितवान्" इति उक्तवान् । 'एतस्यां वार्तायां कथं विश्वासः करणीयः' इति यावत् अहं चिन्तयन् आसं तावता वसुदेवस्य शवः आकाशात् पतन् मया दृष्टः । एतत् दृष्ट्वा निस्सहायकः अहं रथात् पतितवान् । एतस्मात् मम सैन्ये महान् कोलाहलः आरब्धः । एतत् सर्वं साल्वस्य माया इति अहं झटिति ज्ञातवान् । अन्ते अहं चक्रायुधस्य प्रयोगं कृत्वा साल्वं, तस्य विमानम्, अनुचरान् च नाशितवान् ।



युद्धं सर्वं समाप्य यावत् अहं द्वारकाम् आगतवान् तावता भवन्तः वनवासं गतवन्तः इति वार्तां ज्ञातवान् । अनुक्षणम् एव भवतः सर्वान् द्रष्टुम् अत्र आगतवान्" इति ।

पाण्डवान् द्रष्टुम् आगताः यादवाः पाञ्चालाः कैकेयाः च गतवन्तः । पाण्डवाः वनवासं कुर्वन्तः अग्रिमयुद्धविषये चिन्तयन्तः आसन् ।

एकदा धर्मराजः अर्जुनम् उक्तवान् - "अर्जुन ! पूर्वं वृत्रासुरात् भीताः देवताः स्वशस्त्राणि इन्द्रस्य समीपे स्थापितवन्तः आसन् । प्रतिस्मृतिनामिकां विद्यां व्यासमुनिः मां बोधितवान् । भवान् तस्याः विद्यायाः द्वारा इन्द्रात् शस्त्राणि आनयतु । 'अग्रिमदिनेषु भीष्मः, द्रोणः, कर्णः इत्यादिभिः सह युद्धं कथं करणीयम्' इति यदा चिन्तयन् आसं तदा व्यासमुनिः प्रत्यक्षीभूय प्रतिस्मृतिविद्यां मां बोधयित्वा उक्तवान् यत् एतां विद्याम् अर्जुनम् अपि बोधयतु इति । भवान् तां विद्यां ज्ञात्वा पुनरुच्चारणं कृत्वा अद्य एव उत्तरदिशि प्रस्थानं करोतु" इति ।

अर्जुनः धर्मराजात् प्रतिस्मृतिविद्यां ज्ञात्वा, अग्नेः आराधनं कृत्वा, प्रदक्षिणां कृतवान् । कवचं, गाण्डीवं, तूणीरं च धृत्वा धौम्यं, धर्मराजं च नमस्कृत्य ततः प्रस्थितवान् च ।

तं प्रेषयितुं किञ्चिद्दूरम् आगता द्रौपदी- "भवतः कार्ये शुभं भवतु । भवतः अनुपस्थितिः अस्मासु चिन्तां जनयति । भवतः क्षेमम् अभिलषन्तः वयं भवतः

निरीक्षायां भवामः । अस्माकं कष्टं सुखं च भवदधीनम् अस्ति । निर्विघ्नं भवतः कार्यं साधितं भवतु'' इति उक्तवती ।

अर्जुनः अरण्यमार्गेण प्रयाणं कुर्वन्, पर्वतान् अतिक्रम्य इन्द्रकीलपर्वतं प्राप्तवान् । वेगेन ततः गमनसमये 'तिष्ठतु' इति वचनं सः श्रुतवान् ।

'एतस्मिन् निर्जनप्रदेशे कः वदति ?' इति चिन्तयन् अर्जुनः परितः अवलोकितवान् । तदा एकस्य वृक्षस्य अधः उपविष्टः कश्चित् तपस्वी तेन दृष्टः ।

सः कृशकायः चेदपि ब्रह्मतेजसा प्रकाशमानः आसीत् । अर्जुनः तस्य समीपं गत्वा स्थितवान् ।

''वत्स ! भवान् कः ? युद्धार्थं प्रस्थितः इव कवचम्, आयुधानि च धृत्वा किमर्थं वने सञ्चरन् अस्ति भवान् ? अत्र तपस्विनः जितेन्द्रियाः च सन्ति । एतादृशप्रदेशे आयुधस्य आवश्यकता का अस्ति ? अतः तानि क्षिपतु'' इति अर्जुनम् उक्तवान् सः तपस्वी ।

परन्तु अर्जुनः तत् न अङ्गीकृतवान् । तपस्विनः वचनं व्यर्थं जातम् ।

तदा तपस्वी - ''वत्स ! भवतः स्वभावेन अहं सन्तुष्टः । अहम् इन्द्रः अस्मि । भवान् यत् इच्छति तत् प्रार्थयतु'' इति अर्जुनम् उक्तवान् ।

अर्जुनः इन्द्रं विनयेन नमस्कृत्य - ''देव ! भवतः दिव्यास्त्राणि मह्यं ददातु'' इति प्रार्थितवान् ।

तदा इन्द्रः - ''मूढ ! भवते अस्त्राणि किमर्थम् ? पुण्यलोकम् एव भवते दास्यामि । तेन भवान् सन्तोषेण जीवितुम् अर्हति'' इति उक्तवान् ।

''मम सहोदराः अरण्ये कष्टम् अनुभवन्तः जीवनं कुर्वन्ति । एवं सति अहम् एकः एव कथं सुखम् अनुभवेयम् ? अहं क्षत्रियः । मम मरणानन्तरम् अपि मम कीर्तिः शाश्वतिकी भवेत् । सुखार्थम् अपकीर्तिं न प्राप्नुयाम्'' इति अर्जुनः उक्तवान् ।

इन्द्रः अर्जुनं श्लाघमानः - ''वत्स ! भवता स्वस्य इच्छायाः पूरणार्थम् आदौ शिवस्य दर्शनं करणीयम् । अतः भवान् गत्वा शिवदर्शनं करोतु'' इति उक्त्वा अदृश्यतां गतः । - (अनुवर्तते)



# आत्मसौन्दर्यम्

वीरेशः अन्धः आसीत् । तस्य पत्नी मृता इति कारणतः तस्य चतस्रः स्नुषाः एव वीरेशस्य रक्षणं कुर्वन्ति स्म । कदाचित् तस्य गृहं कश्चित् चित्रकारः आगतवान् । सुन्दर्याः स्त्रियाः चित्रं रचनीयमिति विचिन्त्य सः वीरेशस्य स्नुषाणां सौन्दर्यविषयं ज्ञात्वा तत्र आगतवान् आसीत् । परन्तु तासु एकैका अपि अप्रतिमा सुन्दरी आसीत् । अतः 'एतासु परमसुन्दरी का' इति निर्णयं कर्तुम् अशक्तः चित्रकारः स्नुषाः एव एतद्विषये पृष्टवान् । परन्तु ताः लज्जाकारणतः किमपि न उक्तवत्यः एव । तासां पतयः अपि एतद्विषये मौनम् एव आश्रितवन्तः । परितः विद्यमानाः यथामति उत्तराणि दत्तवन्तः । एतस्मात् चित्रकारस्य मनसि भ्रमः उत्पन्नः ।

रात्रौ वीरेशस्य पार्श्वे एव चित्रकारः शयनं कृतवान् । सम्भाषणं कुर्वन् चित्रकारः स्वसमस्यां वीरेशम् उक्तवान् । तदा वीरेशः उक्तवान् - ''भवान् किमर्थं चिन्तां करोति ? मम द्वितीयायाः स्नुषायाः यादृशं सौन्दर्यम् अस्ति तादृशं प्रपञ्चे अन्यस्याः कस्याश्चित् अपि नास्ति इति अहं भावयामि'' इति ।

अनन्तरदिने चित्रकारः निर्णीतवान् यत् द्वितीयायाः स्नुषायाः चित्रं लेखनीयम् इति । एतस्य कारणं वीरेशः एव इति ज्ञात्वा - ''अन्येषां वचनम् एषः चित्रकारः न अङ्गीकृतवान् । परन्तु एतस्य अन्धस्य वचनं कथम् अङ्गीकृतवान्'' इति जनाः चित्रकारस्य उपहासं कृतवन्तः ।

''केवलया दृष्ट्या सौन्दर्यं मापयितुं न शक्यते । अस्माकम् अनुभूत्या यत् सौन्दर्यं मापितं भवति तदेव महत्त्वभूतं भवति । आत्मसौन्दर्यं बाह्यसौन्दर्यात् पृथक्कृत्य दर्शयितुम् अन्धः एव शक्नोति । बाह्यसौन्दर्येण त्रिसृषु स्नुषासु समानासु अपि द्वितीयायाः स्नुषायाः आत्मसौन्दर्यम् अधिकम् अस्ति । अतः तस्याः एव चित्रं लिखितम्'' इति उक्तवान् चित्रकारः ।

एतत् श्रुत्वा अन्याः स्नुषाः द्वितीयां स्नुषाम् आदरेण प्रेम्णा अभिमानेन च मन्दहासपूर्वकं दृष्टवत्यः ।



# शिरीषवृक्षः

अस्माकं प्राचीनकवीनां प्रियवृक्षः शिरीषवृक्षः । कण्वमुनेः आश्रमे शकुन्तला 'शिरीषपुष्पं' धरति स्म इति कालिदासः 'अभिज्ञानशाकुन्तल'नाटके लिखितवान् अस्ति । तुलसीदासः रामचरितमानसग्रन्थे श्रीरामस्य मनः 'शिरीषकुसुमकोमलम्' इति वर्णितवान् अस्ति । अस्माकं देशे बहूनि वर्षाणि यावत् स्थितः रुड्यार्डकिप्लिङ्ग शिरीषवृक्षस्य शाखायां स्थित्वा गानं कुर्वतः कोकिलान् बहुधा श्लाघितवान् अस्ति । आङ्ग्लभाषया शिरीषवृक्षः 'पेरट् ट्री' 'विमन्स् टङ्ग' 'ईस्ट् इण्डियन् वाल् नट्' इति



एवं रीत्या निर्दिश्यते । शिरीषवृक्षाः अरण्ये बहु उन्नताकारेण वर्धन्ते । एते वृक्षाः अस्माकं देशे सर्वत्र सन्ति चेदपि हिमालयप्रदेशे, पश्चिमबङ्गालदेशे, छोटा-नागपुरप्रदेशे, अण्डमान्द्वीपे च आधिक्येन दृश्यन्ते । जलमयप्रदेशेषु एते सम्यक्तया वर्धन्ते । मार्गम् उभयतः एतान् वृक्षान् अलङ्कारार्थं वर्धयन्ति जनाः । एतेषां मूलं लघु भवति इति कारणतः चण्डमारुतात् एतेषां रक्षणं कष्टकरं भवति ।

मार्च-एप्रिल्मासयोर्मध्ये शिरीषवृक्षेषु गुच्छरूपेण पुष्पाणि विकसन्ति । पुष्पाणां वर्णः हरितः श्वेतः च भवति । एतेषां गन्धः मल्लिकापुष्पस्य गन्धः इव भवति । पर्णानि लघु भवन्ति । अक्टोबर्-नवेम्बर्-मासयोः शिरीषवृक्षः पल्लविताः भवन्ति । एप्रिल्मासे पुनः अपि ते पल्लविताः भवन्ति । अगस्ट्-सेप्टेम्बर्-मासयोः एतस्य वृक्षस्य फलानि पक्वानि भवन्ति ।

शिरीषवृक्षैः निर्मितं काष्ठ-फलकं दृढं भवति । अतः शकटानां चक्रेषु अन्य-कृषिक-उपकरणेषु च एषः वृक्षः उपयुज्यते । हिन्दी, बेङ्गाली, मराठी, गुजरातीभाषाभिः एषः वृक्षः 'शिरीष्' इति, तमिलुभाषया 'वेङ्गैमरम्' इति, मलयाळिभाषया 'वेगमरम्' इति च एषः वृक्षः निर्दिश्यते ।

अस्मद्देशीयाः ऋषयः

# गालवः

विश्वामित्रमुनेः पुत्रः एव गालवः । एकदा सायं गालवः नदीतीरे स्थित्वा सूर्याय अर्घ्यं ददत् आसीत् । तदा आकाशमार्गेण गच्छतः चित्रसेननामकस्य गन्धर्वराजस्य मुखात् लाला गालवस्य अञ्जल्यां पतिता । तत् दृष्ट्वा गालवः नितरां खिन्नः । सः श्रीकृष्णसमीपं गत्वा - ''चित्रसेनः अहङ्कारेण व्यवहृतवान् । अतः तस्य मरणं भवतु'' इति उक्तवान् ।

तदा कृष्णः - ''तथैव भवतु'' इति उक्तवान् । एतां वार्तां नारदमुनिः चित्रसेनं सूचितवान् । एतस्मात् गन्धर्वराजः दिङ्मूढः सन् प्राणभयेन कम्पमानः 'यं कम् अपि उपायं वदतु' इति नारदं प्रार्थितवान् ।

तदा नारदः चित्रसेनस्य सान्त्वनं कुर्वन् - ''भवान् पत्नीभ्यां रत्नावली-सन्ध्यावलीभ्यां सह श्रीकृष्णस्य अनुजायाः, अर्जुनस्य पत्न्याः सुभद्रायाः समीपं गत्वा तस्याः साहाय्यं प्रार्थयतु'' इति सूचितवान् ।

चित्रसेनः पत्नीभ्यां सह सुभद्रायाः भवनस्य पृष्ठतः आगतवान् । तत्र एकम् अग्निकुण्डं निर्मापितवान् । चित्रसेनः अञ्जलिं बद्ध्वा, कुण्डस्य समीपे स्थितवान् । तस्य उभे पत्न्यौ अपि उच्चैः रोदनम् आरब्धवत्यौ । तयोः रोदनस्वरं श्रुत्वा सुभद्रा तत्र आगतवती । रोदनस्य कारणं पृष्टवती च ।

प्रवृत्तं सर्वम् उक्त्वा - ''भवत्याः अग्रजः यदि आवयोः पतिं मारयिष्यति तर्हि आवाम् उभे अपि एतस्मिन् अग्निकुण्डे प्राणान् त्यक्ष्यावः'' इति चित्रसेनस्य पत्न्यौ उक्तवत्यौ ।

तयोः दयनीयस्थितिं दृष्ट्वा आर्द्रहृदया सुभद्रा अर्जुनस्य समीपं गत्वा चित्रसेनं रक्षतु इति प्रार्थितवती । शरणार्थिनः रक्षणं क्षात्रधर्मः इति कारणतः अर्जुनः स्वबाणैः चित्रसेनं परितः अदृश्यं कवचं निर्मितवान् । कृष्णस्य बाणैः तत् कवचं भेत्तुं न शक्तम् ।

अनन्तरं कृष्णः एव तत्र आगतवान् । अर्जुनकृष्णयोः युद्धम् आरब्धम् । सुभद्रा तयोर्मध्ये आगत्य निवेदितवती यत् युद्धं स्थगनीयम् इति ।

तदा कृष्णः - ''गालवं क्षमां प्रार्थयतु'' इति चित्रसेनं सूचितवान् । चित्रसेनः गालवं नमस्कृत्य - ''अज्ञानेन कृतम् अपराधं क्षाम्यतु'' इति प्रार्थितवान् ।

तदा गालवः शान्तस्वरेण - ''पश्चात्तापः एव अपराधस्य प्रायश्चित्तं भवति । तस्य अहङ्कारः नष्टः अस्ति । अतः तं मा मारयतु'' इति कृष्णं सूचितवान् ।



# भवन्तः जानन्ति वा ?

१. यस्मिन् स्वामी विवेकानन्दः भागं गृहीतवान् तत् सर्वधर्मसम्मेलनं कदा प्रवृत्तम् ?
२. १७८१ तमे वर्षे याक्टौन्प्रदेशे आंग्लसैन्यं पराजितं जातम् । तेन अमेरिकास्वातन्त्र्ययुद्धं समाप्तं जातम् । तत्काले आंग्लसेनानायकः कः आसीत् ?
३. अन्धविश्वासानाम् अन्त्यक्रियादीनां च विमर्शं कृतवान् हिन्दुधर्मनायकः कः ?
४. १९११ तमे वर्षे दक्षिणध्रुवप्रदेशं प्राप्तवान् रोनाल्ड् अमुण्ड्सन् कस्य देशस्य जनः ?
५. आन्ध्रप्रदेशस्य शिवरामपल्लीतः प्रवृत्तस्य प्रमुखान्दोलनस्य नाम किम् ?
६. नूबियन्मरुभूमिः कुत्र अस्ति ?
७. 'वन्दे मातरम्' इत्येतत् गीतं कस्मिन् कथाग्रन्थे आदौ दृष्टिगोचरं जातम् ? तस्य कथाग्रन्थस्य रचयिता कः ?
८. पेर्डिनाण्ड् डी लेसेप्स् किं करोति स्म ? किन्निमित्तं सः प्रसिद्धिं गतः ?
९. कः भारते रूप्यकात्मकं विनिमयद्रव्यं (टोकन् करेन्सी) व्यवहारे आनीतवान् ?
१०. आंग्लसैनिकः टि.इ. लारेन्स् कस्य देशस्य निमित्तं युद्धं कृतवान् आसीत् ?
११. कः भारतीयः क्रान्तिकारी कारागारे निराहारदीक्षायाः कारणतः प्राणैः वियुक्तः जातः ?
१२. 'क्रिस्तात् अनन्तरं ख्यातः यहूदीयः नाम अल्बर्ट् ऐन्स्टिन् एव' इति कः उक्तवान् ?
१३. 'नाट्यशास्त्र'ग्रन्थस्य रचयिता कः ?
१४. हाङ्गकाङ्गप्रदेशे वैद्यशास्त्रे ऐदम्प्राथम्येन पदवीं प्राप्तवान् चीनादेशीयः नायकः कः ?
१५. त्रिमूर्तिविग्रहकारणतः प्रसिद्धिं गतः गुहालयः कुत्र अस्ति ?
१६. सुप्रसिद्धा 'अमेरिकन् लैब्ररी आफ् काङ्ग्रेस्' केन निर्मिता ?

## उत्तराणि

१. १८९३ तमे वर्षे ।
२. लार्ड् कार्न्वालीस् ।
३. स्वामी विवेकानन्दः ।
४. नार्वेदेशस्य ।
५. भूदानान्दोलनम् ।
६. सुडान्देशे ।
७. आनन्दमठनामके बङ्गालीकथाग्रन्थे । तस्य रचयिता बङ्किमचन्द्रचटर्जी ।
८. सः फ्रेञ्चराजदूतः आसीत् । सुयेज-कुल्यायाः निर्माणस्य निमित्तम् ।
९. फिरोज् तुग्लक् ।
१०. अरेबियादेशस्य निमित्तम् ।
११. जाटिन्दास् ।
१२. जे.बि. हाल्डन् ।
१३. भरतमुनिः ।
१४. सन् यट्सन् । सः 'चैनारिपब्लिक्' निर्माता ।
१५. एलिफण्टाप्रदेशे ।
१६. हर्बर्ट् पुट्नम्वर्येण ।

# सुवर्णसमयस्य प्रश्नावली(४) - उत्तराणि



१. तत् 'दि वार् आफ् दि वर्ल्ड्स्'नामकस्य पुस्तकस्य आधारेण रचितम् आसीत् एच्.जि. वेल्स्वर्येण ।

२. डयाना । एषा रोमन्जनानां चन्द्रदेवता । मृगयायाः चापि अधिदेवता ।



३. तन्नाम अतिप्राचीनं मरणावस्थायां स्थितं नक्षत्रम् ।

४. शुक्रग्रहः । एषः एकः एव पूर्वतः पश्चिमाभिमुखं सञ्चरति ।



५. फेर्डिनाण्ड् मेगेलान् इति । लार्ज् मेगेलानिक् क्लौड्, स्माल् मेगेलानिक् क्लौड् इत्येतौ नक्षत्रमार्गौ भूमितः समीपतरौ स्तः ।

६. अमेरिकादेशस्य उत्तरभागे अरिझोनाप्रदेशे ।

७. ह्यालीधूमकेतुः । एषः ७६वर्षेषु एकवारं दृष्टिगोचरतां याति । इतः पूर्वम् एषः १९८६तमे वर्षे दृष्टिगोचरः जातः आसीत् ।

---

गगने साहसयात्रा

आक्रमणार्थम् अन्तरिक्षनौकया अनुसृतः मार्गः एषः ..... ।





# कल्याण्याः विवाहः

कामाक्षी काचित् भाटकगृहस्य स्वामिनी । सा स्वपुत्रस्य आनन्दस्य विवाहं निश्चितवती अस्ति इति, विवाहमुहूर्तः च अद्यैव इति च ज्ञात्वा अनसूया किङ्कर्तव्यतामूढा अभवत् । अनसूया भाटकरूपेण दत्ते कामाक्ष्याः गृहस्य अर्धभागे वसति स्म ।

बहिः वाद्यानां शब्दः, बालानां कोलाहलः च श्रूयते स्म । अनसूयायाः तु शिरोवेदना वर्धते स्म । सा मञ्चे शयनं कृत्वा कामाक्ष्याः द्रोहबुद्धिं चिन्तयन्ती आसीत् । तस्मिन् समये एव तस्याः पुत्री कल्याणी तत्र आगत्य - "अम्ब ! मुहूर्तः आसन्नः । गच्छाव तावत्" इति उक्तवती ।

"मम अस्वास्थ्यम् । अतः आगन्तुं न शक्नोमि" इति उक्तवती अनसूया ।

कल्याणी सकृत् मातुः मुखदर्शनात् एव तस्याः असन्तोषं ज्ञात्वा विना वचनं ततः निर्गतवती ।

वर्षद्वयतः अनसूया पुत्र्या सह तस्मिन् गृहे एव निवसति स्म । यदा अनसूया तत्र आगता तत्काले गृहस्वामिन्याः कामाक्ष्याः पुत्रः आनन्दः वृथा अटन् कालं यापयन् आसीत् । 'मम पुत्रः कदा वा यशस्वी भवेत्' इति कामाक्ष्याः चिन्ता आसीत् ।

कदाचित् कामाक्षी स्वकष्टम् अनसूयां निवेदयन्ती उक्तवती आसीत् - "यदि मम समीपे धनं स्यात् तर्हि एतं वाणिज्ये वा नियोजयेयम्" इति ।

अनसूयायाः पतिः मरणसमये पञ्चाशत्सहस्रं रूप्यकाणि त्यक्त्वा गतवान् आसीत् । तेषु विंशतिसहस्रं रूप्यकाणि व्ययीकृतानि आसन् । इतोऽपि त्रिंशत्सहस्रं रूप्यकाणि अवशिष्टानि आसन् । तत् धनं कल्याण्याः विवाहार्थम् अनसूया सुरक्षिततया स्थापितवती आसीत् । प्रतिदिनं



तत्र तत्र सङ्गीतं पाठयित्वा, पर्पटस्य विक्रयणं कृत्वा च प्राप्तेन धनेन कुटुम्बनिर्वहणं करोति स्म सा ।

अथ कदाचित् कामाक्षीम् उद्दिश्य - "वयं भाटकजनाः चेदपि अस्मान् स्वपरिवारजनान् इव भावयति भवती । कल्याण्याः विवाहस्य चिन्तनं इदानीं मया न क्रियते । अतः तस्याः विवाहार्थं रक्षितं धनं भवत्याः पुत्रस्य वाणिज्यार्थं दास्यामि" इति उक्त्वा त्रिंशत्सहस्रं रूप्यकाणि आनीय तस्यै दत्तवती अनसूया ।

कामाक्ष्याः नेत्राभ्याम् आनन्दाश्रूणि आगतानि । सा अनसूयायाः हस्तौ गृहीत्वा - "भगिनि, भवती दयामयी । वर्षद्वयानन्तरं कल्याणी मम स्नुषा भूत्वा मम गृहम् अलङ्करिष्यति" इति उक्तवती ।

आनन्दः तेन धनेन वाणिज्यम् आरब्धवान् । दैववशात् गच्छता कालेन आनन्दः महाधनिकः अभवत् ।

कामाक्ष्याः पुरतः विवाहस्य विचारः उपस्थापनीयः इति यावत् अनसूया चिन्तयन्ती आसीत् तावता कामाक्षी त्रिंशत्सहस्रं रूप्यकाणि आनीय अनसूयायै यच्छन्ती - "सम्यक् गणयतु । भवत्याः स्वीकृतम् ऋणं वृद्धिसहितं प्रत्यर्पितवती अस्मि" इति उक्तवती ।

तदा अनसूया - "किम् इदम् ? एतत् धनं वरदक्षिणा इति, कल्याणी भवत्याः गृहस्य स्नुषा भविष्यति इति च अहं चिन्तितवती आसम् । आनन्दः अपि कल्याणीम् इच्छति इति भवत्या एव उक्तम् आसीत् । एवं स्थिते कः एषः व्यवहारः भवत्याः ?" इति आश्चर्येण पृष्टवती ।

"एषः वर्षद्वयात् पूर्वं प्रवृत्तः विचारः । इदानीं कालः परिवर्तितः अस्ति । पण्डरीपुरस्य पार्वतीनाथः मम गृहम् आगत्य - 'लक्षरूप्यकवरदक्षिणां पुत्रीं च दास्यामि' इति उक्तवान् अस्ति । वाणिज्यक्षेत्रे वृद्धिं गतः मम पुत्रः अपि एतत् बन्धुत्वम् इष्टवान् अस्ति । भवती यत् धनं दत्तवती आसीत् तत् वृद्धिसहितं प्रत्यर्पितम् इत्यतः अहम् ऋणात् मुक्ता अस्मि" इति उक्त्वा ततः निर्गतवती कामाक्षी ।

एतावन्ति दिनानि पुत्र्याः विवाहस्य चिन्तनेन विना कालं यापयन्ती आसीत् अनसूया । परन्तु इदानीम् अनिरीक्षिततया पुत्र्याः विवाहस्य चिन्ता आपतिता ।

"किमर्थं चिन्तयति भवती ? इदानीम्

अहं विंशतिवर्षीया अस्मि । मम विवाह-निमित्तम् इतोऽपि कालः अस्ति एव'' इति कल्याणी मातुः सान्त्वनं कृतवती ।

आनन्दस्य विवाहस्य अनन्तरम् - 'एकं दिनम् अपि अत्र वासः न करणीयः' इति चिन्तयित्वा अनसूया भाटकगृहस्य अन्वेषणार्थं प्रस्थितवती । सायङ्काल-पर्यन्तम् अन्विष्टं चेदपि एकं गृहम् अपि न लब्धम् । निराशया गृहं प्रति प्रत्यागच्छन्ती आसीत् सा । मध्येमार्गं एकं गृहं दृष्टं तया । गृहस्य पुरतः विद्यमानस्य वृक्षस्य अधः कश्चन युवकः उपविष्टः आसीत् । अनसूया तस्य समीपम् आगत्य - ''अत्र वासार्थं भाटकगृहम् अस्ति वा ?'' इति पृष्टवती ।

सः युवकः परीक्षादृष्ट्या तां दृष्ट्वा - ''मम गृहस्य पार्श्वगृहं दिनचतुष्टयाभ्यन्तरे एव रिक्तं भविष्यति । भवती इच्छति चेत् तत् पश्यतु'' इति उक्तवान् । तत् गृहं बहु विशालम् अनुकूलकरं च आसीत् । अनसूयायै तत् गृहं नितराम् अरोचत । ''एतस्य भाटकं कियत् ?'' इति सा तं युवकं पृष्टवती ।

''पञ्चशतं रूप्यकाणि । मासद्वयस्य भाटकं पूर्वमेव दातव्यं भवति'' इति उक्तवान् सः युवकः ।

तदा अनसूया - ''भवतु नाम'' इत्युक्त्वा सहस्रं रूप्यकाणि तस्मै दत्त्वा - ''वयं भानुवासरे वस्तुभिः सह आगमिष्यामः'' इति उक्तवती ।

भानुवासरे अनसूया शकटद्वये वस्तूनि आरोप्य यदा प्रस्थितवती तदा कामाक्षी असन्तोषेण - ''अन्यत् गृहं गमिष्यामः इति



पूर्वमेव किमर्थं मां न उक्तवती भवती ?'' इति पृष्टवती ।

''भवती आनन्दस्य विवाहस्य विषये यथा व्यवहृतवती तथैव व्यवहृतवती अहम् अपि'' इति उक्त्वा पुत्र्या सह यानम् आरूढवती अनसूया ।

अनसूया नूतनगृहस्य पुरतः यदा वस्तूनि अवतारयन्ती आसीत् तदा - ''भवन्तः के ?'' इति पृच्छन् गृहस्य अन्तर्भागतः कश्चित् वृद्धः बहिः आगतवान् ।

''भवतः पार्श्वगृहे वासार्थम् आगताः वयम्'' इति उक्तवती अनसूया ।

''भाटकगृहम् ! तत् गृहं रिक्तं नास्ति किल ! तस्मिन् गृहे दशवर्षेभ्यः रामपण्डितः वासं कुर्वन् अस्ति एव'' इति वृद्धः आश्चर्येण उक्तवान् ।



एतत् सर्वं श्रुत्वा अनसूया भीता अभवत् । 'निराश्रयया मया इदानीं किं करणीयम्' इति सा चिन्ताक्रान्ता अपि अभवत् । तदा सः वृद्धः - ''भवती गृहं रिक्तीकृत्य आगता इति भाति । अतः तात्कालिकतया मम गृहे एव भवती स्वस्य वस्तूनि स्थापयतु । यावत् अन्यत् गृहं न लभ्यते तावत् अत्रैव भवत्याः वासः भवतु'' इति उक्तवान् ।

अनसूया कृतज्ञतया तं नमस्कृत्य वस्तूनि तस्य गृहस्य अन्तः स्थापयित्वा - ''सः राघवः कुत्र अस्ति ?'' इति तं पृष्टवती ।

''सः उद्योगान्वेषणार्थम् अत्र आगतवान् आसीत् । दिनद्वयात् पूर्वं स्वग्रामं रामनगरं प्रति गतवान् अस्ति सः'' इति उक्तवान् सः वृद्धः ।

''ते सर्वे दिनचतुष्टयाभ्यन्तरे एव इतः गमिष्यन्ति इति कश्चित् युवकः उक्तवान् । सः भवदीयः एव इति अहं भावयामि । सहस्रं रूप्यकाणि अग्रिमधनरूपेण दत्तम् अस्ति अपि'' इति अनसूया तम् उक्तवती ।

''मम अपत्यम् एव नास्ति'' इति उक्त्वा पत्नीम् आहूतवान् सः वृद्धः । तया सह प्रतिवेशिनः अपि आगताः । अनसूया प्रवृत्तं सर्वम् उक्तवती ।

तदा रामपण्डितस्य पत्नी - ''किं प्रवृत्तं स्यात् इति अहं वदामि । शृण्वन्तु । तद्दिने वयं सर्वे पूजार्थं शिवालयं गतवन्तः आस्म । गृहस्य कीलनम् अकृत्वा अस्माकं बन्धुं राघवं गृहस्य रक्षणे नियोज्य गतवन्तः आस्म । सः एव एतस्याः धनं स्वीकृत्य गतवान् स्यात्'' इति उक्तवती ।

''तर्हि इदानीम् एव तस्य ग्रामं गत्वा वञ्चकं तं ग्रहीष्यामि'' इति वदन्ती अनसूया रामनगरं प्रति प्रस्थितवती । सा सायङ्कालसमये रामनगरे राघवगृहं प्राप्य पिहितं द्वारं शब्दापनीयम् इति यावत् चिन्तयन्ती आसीत् तावता गृहस्य अन्तर्भागतः किञ्चन सम्भाषणं श्रुतम् । अनसूया द्वारताडनविचारं परित्यज्य तत् सम्भाषणं सध्यानं श्रुतवती ।

''अम्ब ! भवत्याः रोगस्य औषधम् आनेतुं मम समीपे धनं न आसीत् । अहं प्रौढः जातः चेदपि गृहस्य विषये अवधानं न दत्तवान् । एतत् अनुचितकार्यम् इति इदमिदानीं मया अवगतम् अस्ति । ज्येष्ठपितृव्यस्य समीपं गत्वा 'मातुः औषधार्थं धनं ददातु' इति अहं पृष्टवान्

चेदपि सः न दत्तवान् । 'दुर्व्यसननिमित्तं मया धनं प्रार्थितम्' इति चिन्तितवान् स्यात् सः'' इति राघवः मातरं वदन् आसीत् ।

तदा राघवस्य माता उक्तवती - ''वत्स ! इदानीं वा भवान् यदि अस्मदीये क्षेत्रे कृषिं कुर्यात् तर्हि भवान् परिवृत्तः इत्यत्र अहं विश्वसिमि'' इति ।

एतत् श्रुत्वा राघवः उक्तवान् - ''अम्ब ! भवत्याः अपेक्षायाः अनुगुणम् एव व्यवहरन् मयि जातं परिवर्तनं प्रमाणीकरिष्यामि । प्रथमकृषितः यत् धनं प्राप्स्यामि, ततः तस्यै आपद्बान्धवायै महिलायै सहस्रं रूप्यकाणि प्रत्यर्प्य क्षमां याचिष्यामि'' इति ।

तयोः सम्भाषणं श्रुत्वा अनसूया सन्तोषम् अनुभूतवती । अङ्गुल्या गृहस्य ताडनं कृतवती च । राघवः द्वारम् उद्घाट्य अनसूयां दृष्ट्वा भयचकितः अभवत् । तस्य शरीरं कम्पते स्म ।

एतत् दृष्ट्वा अनसूया हसन्ती - ''राघव ! अलं भयेन । मम धनम् उत्तमकार्यस्य निमित्तम् उपयुक्तम् अभवत् इति कारणतः इदानीं मम महान् सन्तोषः जातः अस्ति'' इति वदन्ती तस्य सान्त्वनं कृतवती ।

ततः सा राघवस्य मातुः समीपं गत्वा - ''भवतोः वार्तालापम् अहं समग्रं श्रुतवती अस्मि । भवत्याः पुत्रे जातं परिवर्तनं ज्ञातवत्याः ममापि महान् सन्तोषः जातः । भवती राघवस्य विवाहं कर्तुम् इच्छति । मम पुत्री कल्याणी सुन्दरी, बुद्धिमती च । यदि सा भवतोः इष्टाय भवेत् तर्हि अहं भवत्याः पुत्राय मम पुत्रीं दातुम् इच्छामि'' इति उक्तवती ।

तदा राघवस्य माता उक्तवती - ''भवत्याः पुत्री स्नुषात्वेन मम गृहम् आगच्छेत् इत्येव भगवतः सङ्कल्पः आसीत् इति मन्ये । तदर्थम् एव एतत्सर्वं प्रवृत्तम् । विवाहपर्यन्तं भवतीभ्यां कुत्रापि स्थातव्यं खलु । मम गृहस्य अपरार्धं रिक्तम् अस्ति एव । अद्यैव भवती राघवेण सह गत्वा वस्तूनि आनीय तत्र पुत्र्या सह वासं करोतु'' इति ।

''आम् । राघव-कल्याण्योः विवाहः एव भगवतः प्रियः । अतः एव सः एतत्सर्वं कारितवान्'' इति आनन्देन उक्तवती अनसूया ।





# निर्धनत्वं धनिकत्वं च

कस्मिंश्चित् ग्रामे श्रीपतिजगपतिनामकौ युवकौ आस्ताम् । श्रीपतिः धनिकः, गजपतिः निर्धनश्च आसीत् । तथापि उभयोर्मध्ये स्नेहः आसीत् ।

एकदा उभौ अपि अन्यग्रामं गच्छन्तौ आस्ताम् । तदा कस्माच्चित् कूपात् उभे युवत्यौ जलम् उद्धरन्त्यौ ताभ्यां दृष्टे । श्रीपतिः जलं पातुम् इच्छन् कूपसमीपं प्रस्थितः । तावति काले उभयोः युवत्योः सम्भाषणं तेन श्रुतम् ।

या वर्णमयीं शाटिकां धृतवती सा श्वेतवर्णीयां शाटिकां धृतवतीं तरुणीं वदन्ती आसीत् - ''लक्ष्मि ! भवत्याः पतिः कथं भवेत् इति भवत्याः इच्छा ?'' इति ।

''रोहिणि ! अपेक्षाः बहु भवन्ति । अधिकानि आभरणानि, अधिकाः शाटिकाः च अहम् इच्छामि । 'वासार्थं बृहत् भवनं भवेत्, गृहे अधिकाः कर्मकराः भवेयुः, भोजनार्थं विविधशाकानि भवेयुः' इति मम इच्छा'' इति उक्तवती लक्ष्मीः ।

रोहिणी दीर्घं निःश्वस्य - ''मम तु तादृश्यः अपेक्षाः एव न सन्ति । अस्माकं सामर्थ्यानुगुणं व्ययीकरणीयम् । वस्त्राणि आभरणानि च अदृष्टानुगुणं लभ्यन्ते । अन्नेन, सारेण च मम तृप्तिः लभ्यते । जिह्वाचापल्यं यदा भवेत् तदा कलायखादनात् अपि तृप्तिः प्राप्तुं शक्या'' इति उक्तवती ।

एतादृशवचनानि श्रुत्वा - ''एतयोः उभयोः अपि विवाहस्य इच्छा अस्ति । रोहिणी यदि मम पत्नी भविष्यति तर्हि अधिकः व्ययः न भविष्यति । लक्ष्मीः निर्धनस्य जगपतेः पत्नी भविष्यति चेत् सः निश्चयेन कष्टम् अनुभवेत् । तेन अनुभूयमानं कष्टं मया द्रष्टव्यम्'' इति दुर्बुद्धिः श्रीपतेः मनसि आगता ।

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

अनन्तरं सः जगपतेः समीपं गत्वा - "कूपस्य समीपे उभे अविवाहितयुवत्यौ स्तः । आवयोः अपि विवाहस्य इच्छा अस्ति । अतः वर्णमयीं शाटिकां धृतवतीम् अहं परिणेष्यामि । अपरां युवतिं भवान् परिणयतु" इति उक्तवान् ।

जगपतिः एतत् अङ्गीकृतवान् । ततः तौ उभौ अपि ते युवत्यौ अनुसृत्य ग्रामं गत्वा विवाहप्रयत्नं कृतवन्तौ । अनन्तरं जगपतिः लक्ष्मीं परिणीय स्वग्रामम् आनीतवान् । अपेक्षारहितां रोहिणीं श्रीपतिः परिणीय स्वभवनम् आनीतवान् ।



श्रीपतेः भवनं प्रविष्टवती रोहिणी गृहं सर्वं सकृत् अवलोक्य - "एतादृशे महति भवने एकः अपि कर्मकरः नास्ति वा ?" इति पतिं पृष्टवती ।

तदा श्रीपतिः हसन् - "कर्मकराः किमर्थम् ? तेभ्यः वेतनस्य दानं व्यर्थं खलु ? एतावत्पर्यन्तं कश्चित् कर्मकरः आसीत् । इदानीं भवती अस्ति इति कारणतः तम् अहं प्रेषितवान् । इतःपरम् उभौ अपि मिलित्वा कार्यं करिष्यावः" इति उक्तवान् ।

रोहिणी पाकसज्जतां कुर्वती - "केन शाकेन व्यञ्जनं करोमि ? किं मधुरं सज्जीकरोमि ?" इति पतिं पृष्टवती ।

"किमर्थं शाकम् आवश्यकम् ? नारिकेलस्य उपसेचनं पर्याप्तं खलु । मधुरं किमर्थम् ? जिह्वाचापल्यनिवारणार्थं कलायम् आनेष्यामि" इति श्रीपतिः उक्तवान् ।

तस्मिन् दिने रात्रौ रोहिणी पतिम् उद्दिश्य - "अस्माकं महती सम्पत्तिः अस्ति । मम निमित्तं वस्त्रम् आभरणं च आनयतु" इति उक्तवती ।

तदा श्रीपतिः - "भवती एवं सर्वं मा पृच्छतु । सम्पत्तिः अस्ति इति कारणतः विना कारणं व्ययः न करणीयः । वस्त्राणि, आभरणानि वा इदानीं किमर्थम् ? विद्यमानैः एव तृप्तिः प्राप्तव्या" इति पत्नीम् उक्तवान् ।

"एषः अतीव कृपणः" इति रोहिणी पतिं मनसि एव तर्जयित्वा तूष्णीं स्थितवती ।

अनन्तरदिने श्रीपतिः उत्थानानुक्षणम् एव दृष्टवान् यत् गृहे चत्वारः कर्मकराः कार्यं कुर्वन्तः सन्ति इति । सः तान् पृष्टवान् - "भवन्तः के ?" इति ।

"स्वामिन् ! वयं कर्मकराः । भवतः पत्नी उक्तवती यत् अद्य आरभ्य कार्यार्थम् आगन्तव्यम् इति । अतः वयम् आगताः" इति ते विनयेन उक्तवन्तः ।

"किम् ! चत्वारः कर्मकराः ! अहं भवद्भ्यः वेतनं दातुं न शक्नोमि" इति श्रीपतिः कोपमिश्रितस्वरेण उक्तवान् ।

तावति काले तत्र आगता रोहिणी "भवान् आक्रोशनं न करोतु । चतुर्भ्यः किं, चत्वारिंशज्जनेभ्यः अपि वेतनं दातुं शक्यते भवता" इति पतिम् उक्त्वा कर्मकरान् सूचितवती - "किं पश्यन्ति भवन्तः ? सर्वे स्वकार्याणि कुर्वन्तु" इति ।

श्रीपतेः भोजनसमये पाचकाः चतुर्विध-व्यञ्जनानि भक्ष्याणि च परिवेषितवन्तः । तदा श्रीपतिः - "मम गृहस्य नाशः भविष्यति" इति पुनः उच्चैः उक्तवान् ।

"तूष्णीं भोजनं करोतु । भवतः वचनं श्रुत्वा कर्मकराः हसेयुः । प्रतिदिनं शताधिकजनेभ्यः अन्नदानं कर्तुम् अपि सामर्थ्यम् अस्ति अस्माकम् । भवान् चिन्तां न करोतु" इति उक्तवती रोहिणी ।

पुनः दिनचतुष्टयानन्तरं रोहिणी विविधवस्त्राणि, आभरणानि च आनीय पत्ये दर्शितवती ।

तानि दृष्ट्वा श्रीपतिः - "अहं भिक्षुकः भविष्यामि" इति उच्चैः रोदनं कृतवान् ।

तदा रोहिणी 'रोदनं मा करोतु' इति वदन्ती तस्य सान्त्वनं कृतवती ।

"रोदनं विना किं कर्तुं शक्यते ? तस्मिन् दिने कूपस्य समीपे भवत्या उक्ते वचने विश्वासं कुर्वता मया दोषः कृतः । भवती वञ्चिका अस्ति" इति उक्तवान् श्रीपतिः ।

तदा रोहिणी आश्चर्येण - "तथा वा ? तस्य दिनस्य वचनं श्रुत्वा मां परिणीतवान् वा भवान् ? वस्तुतः तदा अहम् असत्यं न



उक्तवती । यदि अस्माकम् एतावती सम्पत्तिः न स्यात् तर्हि अहं तथा एव अकरिष्यम्'' इति उक्तवती ।

'मम परिस्थितिः तु एवम् अस्ति । तर्हि लक्ष्मीं परिणीतवतः जगपतेः परिस्थितिः कथं स्यात् ?' इति चिन्तयन् श्रीपतिः जगपतेः गृहं गतवान् ।

यदा सः जगपतिगृहं प्राप्तवान् तदा लक्ष्मीः जगपतिः च भोजनं कुर्वन्तौ आस्ताम् । जगपतिः - ''आगच्छतु मित्र !'' इति श्रीपतिम् आहूतवान् । जगपतेः मुखं चिन्ताकुलम् इव न दृश्यते स्म । सः उत्साहेन नारिकेलस्य उपसेचनेन सह भोजनं कुर्वन् आसीत् । लक्ष्म्याः मुखे अपि असन्तृप्तिः न आसीत् । गृहं लघु चेदपि सुन्दरं, स्वच्छं च आसीत् ।

जगपतिः भोजनं समाप्य श्रीपतेः पार्श्वे उपविशन् - ''भवतः मेलनं कर्तुम् एव अहं न शक्तवान् । भवतः गार्हस्थ्यजीवनं कथम् अस्ति ?'' इति पृष्टवान् ।

''मम जीवनं सुखमयम् अस्ति । परन्तु भवान् किमर्थं मां द्रष्टुं न आगतवान् ?'' इति जगपतिं पृष्टवान् श्रीपतिः ।

''तत्र पश्यतु । वाटिकायां स्थितानि कुतृणानि उत्पाट्य तत्र स्वच्छीकृत्य सस्यानि वर्धितानि । अत्रैव मम समग्रसमयः व्ययितः'' इति उक्तवान् जगपतिः ।

''तथा चेत् भवतः पत्नी अपि भवता सह कार्यं करोति इति सिद्धम् । सा आभरणवस्त्रादिनिमित्तं भवन्तं न पीडयति वा ?'' इति पृष्टवान् श्रीपतिः ।

''तथा किमपि नास्ति किल'' इति उक्तवान् जगपतिः ।

तदा श्रीपतिः उक्तवान् - ''तर्हि तस्मिन् दिने कूपस्य समीपे प्रवृत्तं सम्भाषणं विपरीतं जातम् अस्ति'' इति ।

तत् वचनं श्रुत्वा लक्ष्मीः उक्तवती - ''विपरीतं किमपि नास्ति । तदा मम अपेक्षाः तथा एव आसन् । परन्तु इदानीम् अहं वास्तविकतां ज्ञातवती । परिस्थितेः अनुगुणं विद्यमानेन एव तृप्तिं प्राप्य सन्तोषेण अस्मि'' इति ।

एतस्मात् श्रीपतिः - ''धनिकत्वम् अस्ति चेत् अपेक्षाः वर्धन्ते । निर्धनत्वम् अपेक्षाणाम् अवरोधं करोति'' इत्यंशं ज्ञातवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जनवरी - १९९७ मासे प्रकटयिष्यामः ।



S.G. Seshagiri



S.G. Seshagiri

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **पुरातनम् एतत् समीकरोमि ।**

द्वितीयचित्रम् - **नूतनं किञ्चित् अहं सृजामि ।**

प्रेषकः - एस्. गिरिधरन्, वेदपाठशाला, थेनप्पाक्कम्, इय्याम्पट्टै, लघुकाञ्चीपुरम् - ६३१६०१


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India), Controlling Editor: NAGI REDDI.

CHANDAMAMA (Sanskrit) November 1996 Regd. No. TN / MS (S) 302